*Reprinted from the Annals of Oriental Research of the University of Madras Volume XIV 1957-58*



# NYĀYA DĪPĀVALĪ with 2 Commentaries

BY

S. SUBRAMANIA SASTRY,
*Lecturer in Sanskrit, University of Madras.*

# NYĀYADĪPĀVALI

*Nyāyadīpāvali* is an important independent work on the Advaita, treating of the unreality of the Universe, by Sri Anandabodhacharya. Commenting upon karika 4 of Chapter II of Sri Gaudapada's Mandūkyakarikas which runs—

अन्तःस्थानात्तु भेदानां तस्माज्जागरिते स्मृतम् ।
यथा तत्र तथा स्वप्ने संवृतत्वेन भिद्यते ॥

Sri Sankaracharya gives the syllogism—"The Universe is unreal, because of being perceptible. All that are perceptible are unreal like objects of dream - cognitions and illusions. The universe which is also perceptible must be unreal" This syllogism is discussed and amplified in *Nyāyadīpāvali*. Though the unreality of the universe is asserted by Śruti texts like '*Nehanānāstikinchana*' etc. the great Acharya thinks that inference is indispensable to strengthen the predicates of the Śrutis which do not end in mere assertion of facts but which bring about the realization of Brahman The Śruti itself seeks the help of inference when it says "Atman should be heard and reflected upon." It is here that Sri Sankara first propounded this syllogism so famous in all later Vedantic works. In amplifying this syllogism Anandabodhacharya rejects all possible fallacies pertaining to *Paksha* the minor term *Sādhya* the major term and *hetu* the middle term. He points out with authority that perceptibility and reality do not go together and that which is perceptible say the shell-silver, is unreal. The major opponent to this syllogism in the time of the author was Prabhākara who advocated the theory of Akyāti that no cognition is illusory, all cognitions being always in conformity with their objects. Thus holds Prabhakara there is no object called shell-silver on the analogy of which the unreality of the universe can be inferred.

In refuting Prabhākara, our author analyses Akhyati in all possible ways and proves that it is not sound. Sri Vyasa Thirtha and other later authors who repudiated the reasonings contained herein were answered by Madhusudana Sarasvati in his *Advaita Siddhi* and by Brahmananda in his *Chandrika*.

## The Author

Anandabodhacharya who quotes from Vimuktatman's Iṣṭasiddhi (1050 A.D.) must have lived after him and prior to Anandanubhavacharya, (1150) the author of Nyayaratnadipavali who quotes from Anandabodha's Nyayamakaranda. From his reference to Vimuktatman as guru in his Pramāṇamalā[1] Prof Hiryanna suggests that Anandabodha might have been a disciple of Vimuktatman[2]. Other works of Anandabodha so far known are Pramāṇamalā, Nyāyamakaranda and Śābdanirṇaya Vyākhyā.

## The Commentaries

Two commentaries for this work are found in the Oriental libraries one by Anubhuti Swarupa and the other by Sukha prakasa. Both are excellent commentaries, being very helpful to the reader in finding out the purport of Anandabodha's terse style. Regarding Anubhutiswarupacharya and his works reference may be made to Dr. V. Raghavan's "Anubhutiswarupacharya" in J. O. R. I. He lived before Amalananda (1250). In some manuscripts the work begins with 'Nyayadipavali Vyakhya by Narendranagri.' But this is incorrect as the last verse of the work and the Colophon clearly show that it is from the pen of Anubhutiswarupa.

The author of the second commentary is Sukhaprakasa. He is referred to by Amalananda as his preceptor (*Vidyaguru*). Thus being an elder contemporary of Amalananda he must have lived between 1200 and 1250 A.D

## Manuscript Materials

The press copies of the manuscripts of these three works which were prepared and collated with manuscripts from B.O.R.I. Adyar and Benares, by the late Dr. T. R. Chintamani were handed over to me by Sri P. S Ramasastri of the Madras Sanskrit College. I took pains to go through them and adopt the most appropriate readings ignoring the spurious and incorrect ones.

S. SUBRAHMANYA SASTRI.

1. एतदेवोक्तं गुरुभिः P. 28. Pramanamala with 2 commentaries -Advaita Sabha Series No. 10

2. See Introduction to Iṣṭa Siddhi P. xiii.

## ॥ न्यायदीपावलिः ॥

### ॥ श्रीमदानन्दबोधभट्टारकविरचिता ॥

जगदङ्कुरकन्दाय विशदानन्दमूर्तये ।

गलिताखिलभेदाय नमः शान्ताय विष्णवे ॥

---

॥ श्रीः ॥

## न्यायदीपावलीव्याख्या

### ॥ नरेन्द्रनगरीविरचिता ॥

करोतु तुरगग्रीवो माकरः करुणां मयि ।

सुरासुरशिरोहारिरत्नभ्राजिपदाम्बुजः ॥

अनन्तमणिरत्नानामाकरापारसागरान् ।

गरीयसो गुरून् नौमि स्वान्तमोहापहारिणः ॥

श्रीमदानन्दबोधस्य विबुधानन्ददायिनः ।

न्यायदीपावली टीका प्रथनाय प्रतन्यते ॥

तत्रादौ तावत् न्यायदीपावल्याख्यं प्रकरणं चिकीर्षुराचार्यः चिकीर्षितप्रकरणस्याविघ्नेन परिसमाप्तिप्रचयपरिपन्थिकल्मषविनिवृत्तये विशिष्टदेवतानमस्कारलक्षणं मङ्गलमाचरति—**जगदङ्कुरकन्दायेति** ॥ प्रकरणं चेदं शास्त्रस्येति यानि तस्य संबन्धाभिधेयादीनि तान्येवास्येति न पृथग्वर्णयितव्यानि । शास्त्रमारभमाणेन च भगवता कृष्णद्वैपायनेन "अथातो ब्रह्मजिज्ञासा" इति ब्रह्मज्ञानं बन्धहेतुनिबर्हणं सूचयता सूचितं बन्धस्य मिथ्यात्वमिति वर्णितं भगवता भाष्यकारेण अध्यासभाष्ये । तस्यैव तर्काभिमानिभिराक्षिप्तस्य तर्केणैव समाधानार्थमिदं प्रवृत्तमिति शास्त्रकार्यान्तरे स्थितं इत्यारम्भणीयम् ।

श्रीः

## ॥ न्यायदीपावलीटीका ॥

### [ सुखप्रकाशमुनिविरचिता ]

अद्वैतानन्दसन्मात्रस्वप्रकाशचिदात्मकम् ।
यमामनन्ति वेदान्तास्तं नृसिंहतनुं नुमः ॥ १ ॥

यत्पादाम्भोजयुगलचिन्तामृतमयोर्मयः ।
निरस्यन्ति तमःपङ्कं तं नुमश्चित्सुखं गुरुम् ॥ २ ॥

गुरुवरकरुणाकटाक्षभास्वत्किरणविदीर्णतमोदरास्समन्तात् ।
विगलदखिलदोषतत्त्वसाक्षात्करणकलाकौशला वयं जयामः ॥ ३ ॥

द्वैतोद्यन्मतपञ्चकात्मतमसो ध्वंसैकतिग्मद्युतिः
य: स्वस्तोद्भटमोहजालविशदानन्दैकबोधाम्बुधिः ।
ख्यातस्तेन सुखप्रकाशमुनिना श्रीन्यायदीपावली-
टीकेयं क्रियते निगूढविकटग्रन्थार्थसम्बोधिनी ॥ ४ ॥

प्रारिप्सितग्रन्थस्याविघ्नेन परिसमाप्तये प्रचयगमनाय शिष्टाचारपरिपालनाय कृतमिष्टदेवतानमस्कारं प्रकरणस्य विषयसंबन्धप्रयोजनसूचनाय ग्रन्थतो निबध्नाति प्रथमश्लोकेन ।

अत्र च जीवब्रह्मणोरेकार्थलक्षणविषयप्रतिपादनाय ब्रह्मपदार्थं निर्देष्टुं तस्य तटस्थलक्षणमाह—**जगदङ्कुरकन्दायेति** ॥ जगत्कारणत्वेन सर्वज्ञत्वस्योपक्षेपात् ज्ञानरूपतापि प्रतिपादिता भवति । स्वरूपलक्षणमाह—**विशदेति** ॥ विशदो निर्मलः आनन्दो मूर्तिः स्वरूपं यस्य स तथा । साधनपारतन्त्र्यानित्यत्वसातिशयत्वराहित्यं नैर्मल्यम् । तथापि कांश्चित्सुखिनः कांश्चिदत्यन्तदुःखिनः सृजतो रागद्वेषादिमत्त्वमित्यत आह **शान्तायेति** ॥ रागद्वेषादिरहितायेति यावत् । प्राणिकृतधर्मापेक्षया वैषम्यमादधानस्य न रागद्वेषादिमत्त्वमित्यर्थः । तथापि सृज्यमानेन कार्येण सद्वितीयत्वादद्वैतश्रुतिव्याकोप इत्यत आह—

दुस्तर्कतिमिरश्रेणीविदारणविशारदाम् ।
रुचिरां न्यायदीपानामावलिं रचयाम्यहम् ॥

**न**-अत्रैवमक्षरयोजना— नमस्तस्मै । कस्मै ? विष्णवे । व्यापनशीलाय परमात्मने । निर्विशेषस्य च नमस्कारादिव्यवहारगोचरत्वं नावकल्पत इति जगत्कारणतापन्नस्य तस्यैव तद्दर्शयति—**जगदङ्कुरकन्दायेति** ॥ जगदेवाङ्कुरः, तस्य कन्द इव कन्दः, तस्मै जगन्मूलकारणायेत्यर्थः । ननु जगतोऽशुद्धिदुःखाद्याक्रान्तत्वात् कार्यकारणयोश्च सालक्षण्यदृष्टेः ब्रह्मापि तथेत्याशङ्क्याह—**विशदानन्दमूर्तय इति** ॥ विशदः शुद्धः आनन्दो मूर्तिरस्येति विग्रहः । ननु तर्हि पूर्वापरविरोध इत्याशङ्क्याह—**गलिताखिलभेदायेति** ॥ गलितो विभ्रष्टोऽखिलो भेदः कार्यकारणाद्यात्मकः यस्मात् स तथोक्तः, तस्मै । एतदुक्तं भवति—न पूर्वापरविरोधशङ्काकलङ्कावतारः । मायाद्वारकत्वात् जगन्मूलकारणतायाः, स्वाभाविकत्वाच्चानन्दमूर्तित्वस्येति । **अन्ये** त्वाहुः— पूर्वार्धेन जगन्निमित्तोपादानकारणे ज्ञानानन्दाद्वितीयात्मके ब्रह्मणि वेदान्तानां समन्वयं प्रदर्श्य तत्रैव विरोधमाशङ्क्य पर्यहार्षीदाचार्यो—**गलिताखिलभेदायेति** । अत एव च भेदजातस्याविद्यात्मकस्य विद्यया निवृत्त्युपपत्तौ शान्तसर्वोपद्रवब्रह्मस्वरूपावस्थानं मोक्ष उपपद्यत इत्याह—**शान्तायेति** ॥ यदुद्दिश्य मङ्गलाचरणमाचरितं तन्निर्दिशति—**दुस्तर्केति** ॥ न्याया एव दीपाः; तेषामावलिं पङ्क्तिं रचयाम्यहमिति प्रतिजानीते । कथंभूताम् ? रुचिराम् । शोभिताम् । पुनः कथंभूतां ? दुष्टाश्च ते तर्काश्च दुस्तर्काः; त एव तिमिराणि तमांसि तेषां श्रेणी सोपानपर्वपरम्परा तस्याः विदारणे विशारदां चतुरामित्यर्थः ।

**सु**-**गलिताखिलभेदायेति** ॥ जगदङ्कुरकन्दाय विशदानन्दमूर्तये विष्णवे इति ब्रह्मपदार्थो निर्दिष्टः । गलिताखिलभेदाय शान्तायेति पदाभ्यां रागादिमत्वसद्वितीयत्वादीनां च लोकप्रसिद्धजीवधर्माणां निरासेन शोधितः जीवपदार्थ उपक्षिप्तः ।

यद्यपि गलिताखिलभेदपदेन शान्तत्वमपि सिध्यति । तथापि गोबलीवर्दवत् एकाद्वितीयपदवच्च प्रतिनियतार्थपरतया पौनरुक्त्यपरिहार इति मन्तव्यम् । सामानाधिकरण्येन च तयोरेकत्वमुक्तम् । विशदानन्दमूर्तये गलिताखिलभेदायेति पदाभ्यां निरतिशयानन्दप्राप्तिनिश्शेषदुःखनिवृत्तिरपवर्ग इह प्रयोजनमभिहितम् इति मन्तव्यम् ।

विवादपदं मिथ्या, दृश्यत्वात्; यदित्थं तत्तथा, यथा उभयवाद्यविवादपदं रजतम्; तथैतत्; ततस्तथा। विवादस्य अनेकरूपत्वेऽपि साध्यविशेषोपादानेन तद्विशेषसिद्धिः। सत्यविवेकस्य मिथ्याभावस्य साध्यत्वान्नाप्रसिद्धविशेषणता;

न-'गलिताखिलभेदाय' इत्यनेन सकलद्वैतानृतत्वमवादि विरोधापनुत्तये। तदुपश्रुत्य द्वैतवादिबृन्दता वेदान्तिना अद्वैते विवदमाना वावदीति द्वैतानृतत्वे किं मानमिति। तत्प्रतिबोधायेदमनुमानं प्रयुज्यते—**विवादपदं मिथ्येति**॥ विवादपदग्रहणं प्रपञ्चैकदेशे सिद्धसाधनताव्युदासार्थम्। तत्रापि नैयायिकानुसारेण पञ्चावयवं प्रयोगमारचयति स्माचार्यः। मीमांसकानुसारेण त्र्यवयवमारचयितव्यम्; बौद्धानुसारेण तु द्व्यवयवमिति विभागः। तत्र प्रथमं प्रतिज्ञानिर्देशः। तल्लक्षणं च प्रतिपिपादयिषया पक्षवचनं प्रतिज्ञेत्याहुः। परसिद्धान्तलक्षणानि मन्दमतिव्युत्पादनाय लिख्यन्ते, तदर्थत्वात्प्रयासस्य। **दृश्यत्वादिति**। द्वितीयो हेत्ववयवः। तल्लक्षणं च साधनत्वख्यापकं लिङ्गवचनं हेतुरिति। **यदित्थं तत्तथेति**। यद्दृश्यं तन्मिथ्या इत्यन्वयव्याप्तिं कथयति। तल्लक्षणं च साध्यसामान्येन साधनसामान्यस्य व्याप्तिरन्वयः इति। **यथोभयवाद्यविवादपदमिति**। उदाहरणावयवस्तृतीयः अन्वयमुखेन दृष्टान्ताभिधानं साधर्म्योदाहरणं शुक्तिरूप्यादिदृश्यं चेदं विवादपदमिति साधर्म्योपनयः। तल्लक्षणं च दृष्टान्ते

सु-एवं कृतदेवतानमस्कारे ग्रन्थमारभते—**दुस्तर्केति**॥ सिद्धान्ततर्काणां पूर्वपक्षतर्कैः समानबलत्वेनानिर्णायकत्वं दुष्टत्वविशेषणेन परिहृतम्। गलिताखिलभेदत्वमसिद्धम् भेदस्य प्रत्यक्षादिसिद्धतया सत्यत्वादित्याशंक्य तस्य मिथ्यात्वं साधयति—**विवादपदमिति**॥

यद्यपि व्यवहारे भट्टमतानुसारिणां त्र्यवयवः प्रयोगः समुचितस्तथापि यादृङ्नियममास्थाय परः प्रत्यवतिष्ठते तथैव प्रतिपत्तव्यो वादिनापीति निर्णय इति संबन्धमनुसृत्य पञ्चावयवप्रयोग इति मन्तव्यम्।

ननु कृतकत्वनित्यत्वादिभेदेन विवादानामनेकरूपतया तद्विषयाणामपि बहुत्वाद्विशेषेण धर्मिणो निर्देशाभावादपदार्थकं प्रतिज्ञावचनमित्यत आह—**विवादस्येति**। साध्यविशेषस्य मिथ्यात्वस्योपादाने तदाश्रयत्वं धर्मिणो विशेषप्रतीत्युत्पत्तेर्विवादपदेन च सत्यमिथ्यात्वविवादविशेषस्योपस्थापनान्नापार्थकमित्यर्थः। किं सदसद्वैलक्षण्यं मिथ्याशब्दार्थः, किंवा परप्रसिद्धान्यथाख्यातिरूपत्वं, प्रथमे अप्रसिद्धविशेषणता परस्मिन्नपसिद्धान्त इत्याशंक्य परिहरति—**सत्यविवेकस्येति**। सत्यताविवेकस्य, सत्यतानधिकरणस्येत्यर्थः।

नापसिद्धान्तोऽपि । सत्यमबाध्यम्, बाध्यं मिथ्या—इति तद्विवेकः । प्रतिपन्ने धर्मिणि

न-प्रसिद्धाविनाभावस्य साधनस्य दृष्टान्तोपमानेन पक्षे व्याप्तिख्यापकं वचनमुपनय इति ॥ **ततस्तथेति** ॥ तस्मान्मिथ्येति निगमनम् । उपनयानन्तरं सहेतुकं प्रतिज्ञायाः पुनर्वचनं निगमनमिति च तल्लक्षणमाहुः । एवं तावदन्वयव्यतिरेकिणि पञ्चावयवे प्रयुक्ते केचिदाहुः—विवादस्य प्रधानपरमाण्वादिकारणवादस्वयंप्रकाशत्वास्वयंप्रकाशत्वादि-भेदेनानेकविधत्वात्; कोऽत्र विवादगोचरो धर्मी निर्दिष्टः इति निश्चेतुमशक्यत्वात् सन्दिग्धविशेष्यः पक्षाभासः स्यात इति, तत्राह—**विवादस्येति** ॥ यद्यपि विवादस्यानेक-रूपत्वं लोके तथापि मिथ्येति साध्यविशेषग्रहणेन यत्र सत्यत्वमिथ्यात्वाभ्यां विवादः स एव धर्मिविशेषो निश्चेतुं शक्यते इत्यर्थः । ननु तर्हि किमिदं मिथ्यात्वं नाम? किमनिर्व-चनीयत्वम्, आहोस्वित् तुच्छत्वम्? प्रथमेऽप्रसिद्धविशेषणता पक्षदोषः । चरमेऽपसिद्धान्ता-पत्तिः इत्याशङ्क्याह—**सत्यविवेकस्येति** ॥ मिथ्यात्वं नाम परमार्थसत्यत्ववैधुर्यं सिपाधयिषितम्; तच्च शुक्तिरूप्यादिषु प्रसिद्धम्—इति नोक्तकलङ्ककलावकाश इत्यर्थः । सत्याद्विवेकः सत्यविवेक इति विग्रहः । तमेव स्फुटीकरोति—**सत्यमबाध्यमिति** ॥ सार्वकालिकबाधविरहः सत्यत्वम्, कादाचित्कबाधगोचरत्वं च मिथ्यात्वमित्यर्थः । ननु धर्मी प्रपञ्चः किं प्रमाणेन प्रतिपन्नः किं वा न? प्रथमे धर्मिग्राहकप्रमाणविरुद्धः पक्षः; चरमेऽप्रसिद्धविशेष्यता पक्षदोष इत्याशङ्क्याह—**प्रतिपन्न इति** ॥ प्रतिबिम्बवत्

---

सु-किंतत्सत्यं, यद्रूपताऽनधिकरणत्वमिति, तदाह—**सत्यमबाध्यमिति** ॥ यद्येन रूपेण प्रतिपन्नं तस्य तेन रूपेण निषेधबोधो बाधः, तदविषयस्सत्यः, तद्विषयत्वं मिथ्यात्वं इति विवेकः ।

अयं च मिथ्याशब्दार्थो नाप्रसिद्धः भ्रान्तिस्थले रजतमित्यादिरूपेण प्रतिपन्नस्य नेदं रजतमित्यादिरूपेण निषेधबोधस्यायथार्थज्ञानवादिभिरङ्गीकारात् भ्रान्तिप्रतीतरूपस्य सर्वस्यानिषेधे भ्रान्तिबाधयोरनुपपत्तेः । किञ्चिदंशबाधस्याभ्युपगमनीयत्वात् । अख्यातिवादे चायथार्थज्ञानस्य साधयिष्यमाणत्वान्नाप्रसिद्धविशेषणतेत्यर्थः ।

ननु प्रमाणेन प्रतिपन्नस्य प्रपञ्चस्य धर्मित्वे तस्य सत्यतया मिथ्यात्वसाधने प्रतिज्ञा-पदयोर्व्याघातः । अप्रतिपन्नत्वे चाप्रसिद्धविशेष्यः पक्षः इत्यत आह—**प्रतिपन्न इति** ॥ प्रतिपन्नमात्रस्य धर्मित्वे व्यभिचारासम्भवेन प्रतिपन्नस्य विशेषणस्य व्यभिचारावारकस्य वैयर्थ्यादित्यर्थः । प्रतीतमात्रस्य धर्मित्वे गगनारविन्दादेरपि धर्मित्वप्रसक्तिरित्यत आह—

न्यायप्रवृत्तेः प्रमाणप्रतिपन्न इति असमर्थविशेषणत्वात् नाप्रसिद्धविशेष्यतापि । एतच्चाश्रयासिद्धिनिरासे निपुणतरं निरूपयिष्यते । न च प्रमाणविरुद्धः प्रतिज्ञातार्थ इति कालातीतोद्धारे । नापि हेतुरसिद्धः, दृश्यत्वस्य पक्षवृत्तित्वनिश्चयात् । प्रमाणदृश्यत्वे बाधसिद्धिः भ्रान्तिदृश्यत्वे प्रतिवाद्यसिद्धिरिति चेन्न, साधारणप्रयुक्ते हेतौ विशेषविकल्पेन निराकरणे सर्वसाधनभङ्गप्रसङ्गात् ।

---

न-प्रतीतिमात्रगोचरे धर्मिणि प्रपञ्चेऽनुमानप्रवृत्तेः संभवात् प्रमाणेनैव प्रतिपन्नो धर्मी वक्तव्यः इति प्रमाणविशेषणस्याकिञ्चित्करत्वान्नाप्रसिद्धविशेष्यता । नापि धर्मिग्राहकप्रमाणविरोध इत्यर्थः । इदमिहाकूतम्—यदि प्रतिपन्नत्वे सत्यपि प्रमाणप्रतिपन्नत्वाभावापराधेन धर्मित्ववैधुर्यं दृष्टचरं स्यात्, तदा प्रमाणप्रतिपन्नत्वविशेषणमर्थवद्भवेत्; न तु तदस्ति । नन्वप्रामाणिकाङ्गसङ्गिनोऽनुमानस्याङ्गिनोऽप्यप्रामाणिकत्वप्रसङ्गः स्यात्; न, प्रतिबिम्बस्यानुमाने दर्शनात । परपक्षप्रतिषेधानुमानेऽप्यप्रामाण्यप्रसङ्गाच्च । किञ्च किं मां प्रत्युदाह्रियेत, यत्प्रामाणिकाङ्गसङ्ग्येव प्रामाणिकम्? न च साङ्कर्यपर्यनुयोगो व्याप्तत्वाव्याप्तत्वाभ्यां विभागसिद्धेः वक्ष्यमाणत्वात् । अतः प्रतीतिसिद्धस्यानुमानाङ्गतायां न कश्चिद्दोष इति । किञ्चैतत् प्रमाणप्रतिपन्नत्वविशेषणस्यासमर्थत्वं विस्तरेणाश्रयासिद्धतानिराकरणावसरे निरूपयिष्यतेऽस्माभिः । तथा धर्मिग्राहकप्रमाणविरोधो नास्तीति च कालात्ययापदिष्टतास्फोटनप्रघट्टके निरूपयिष्यत इत्याह—**एतच्चेत्यादिना** ॥ एवं तावत् पक्षदोषं पर्यहार्षीदाचार्यः । संप्रति संभाव्यमानसाधनदूषणानि पराकर्तुं प्रववृते । तत्र स्वरूपासिद्धं तावत् पराकरोति—**नापीति** ॥ अनिश्चितपक्षवृत्तिरसिद्धः इति ह्यसिद्धलक्षणम् । तन्नेह ढौकत इत्यर्थः । किमिदं दृश्यत्वं प्रमाणेन भ्रान्त्या वेति विकल्प्यान्यतरासिद्धिं शङ्कते—**प्रमाणदृश्यत्व** इत्या-

**सु-एतच्चाश्रयेति** ॥ निरूपाख्यत्वेन तस्यानाश्रयत्वं न प्रमाणाप्रतिपन्नत्वादिति साधयिष्यमाणत्वात् । न च प्रमाणाप्रतिपन्नत्वादेव प्रकृतस्यापि निरुपाख्यत्वसाधनमर्थक्रियाकारित्वेन प्रत्यक्षप्रतीयमानतया बाधात् ।

न चैवं सति वचनमात्रेणापि हेत्वादेः सिद्धत्वासिद्धत्वप्रतीतिसंभवेन तत्त्वनिर्णयजयादिव्यवस्थानुपपत्तिः । तासु तासु कथासु तत्तद्वादिप्रतिवादिमध्यस्थानां त्रिचतुरकक्ष्यापर्यन्तमनुत्पन्नबाधप्रतीतिसिद्धहेत्वहेत्वादिलक्षणोत्पन्नस्य साधकत्वमसाधकत्वं चेतरस्येति समयसंबन्धेन जयादिव्यवस्थोपपत्तेः । कालत्रये सर्वपुरुषैरबाध्यमानस्य दुर्विज्ञेयत्वात् पराभिमत-

**तथा हि**—धूमाद्धूमध्वजसाधनेऽपि अनेतद्देशकालसंलग्नो धूमो हेतुः, किं वा एतद्देशकालसंलग्नो धूमो हेतुः? असिद्धिराद्ये; द्वितीये च साधनशून्यं निदर्शनम्—इति पर्यनुयोगस्याविवक्षितविशेषधूममात्रं हेतुरित्येव परिहारः। स च समः प्रकृतेऽपि। न च प्रमाणागोचरो धर्मीत्याश्रयासिद्धिरिति सांप्रतम्; प्रतीतिगोचरमात्रस्याश्रयतोपपत्तौ प्रमाणविशेषणस्यासमर्थत्वात्। सुरभितासाधने तु गगनारविन्दस्यानाश्रयता न प्रमाण-विरहात्; अपि तु अनुपाख्यत्वात्; तद्विलक्षणता प्रकृते प्रतीतिसिद्धा। न च

---

न-दिना। विकल्पसमा जातिरियमिति मन्वानः परिहरति—**न साधारण इति**॥ सर्वसाधनभङ्गं व्यनक्ति—**तथा हीत्यादिना**॥ वह्निमान् महीधरः, धूमवत्त्वात्, महान-सवत् इत्यत्रापि यदि देशान्तरादिविशिष्टो धूमो हेतुः तर्हि असिद्धिः स्यात्, अपक्षधर्मतया। यदीदानींतनताविशिष्टो धूमो हेतुः तदा साधनविकलो दृष्टान्तः इति पर्यनुयोगसंभवात् सार्वजनीनस्याप्यस्य साधनस्य भङ्गप्रसङ्ग इत्यर्थः। परः पर्यनुयोगं पराकरोति—**इति-पर्यनुयोगस्येति**॥ तर्ह्यस्मत्पक्षेऽपि दृक्कर्मतामात्रं दृश्यत्वम्; अतः समानः परिहारः इत्याह—**स चेति**॥ एवं तावदन्यतरासिद्धिं परिहृत्य इदानीमाश्रयासिद्धि-माशङ्क्य परिहरति—**न चेति**॥ नन्वप्रामाणिकस्याश्रयत्वे गगनारविन्दं सुरभि, अरविन्दत्वात्, सरोजारविन्दवत् इत्यस्यापि सदनुमानतापात इत्याशङ्क्याह—**सुरभितासाधने त्विति**॥ तुच्छत्वात् तत्राश्रयासिद्धिः तुच्छविलक्षणता तु प्रकृते

---

सु-प्रमाणासिद्धत्वस्य वक्तुमशक्यत्वादुदीरितप्रतीतमात्रस्य धर्म्यादिभावे प्रमाणविशेषणस्य वैयर्थ्यमिति भावः।

कुम्भादिसत्यताग्राहिप्रत्यक्षविरुद्धः प्रतिज्ञातार्थ इत्याशंक्याह—**न च प्रमाणेति**॥ सत्यत्वस्य दुर्विवेचतया प्रत्यक्षविरोधं कालातीतोद्धारे परिहरिष्याम इत्यर्थः। एवं पक्षदोषान् परिहृत्य हेतुदोषानुद्दिधीर्षुः स्वरूपासिद्धिं तावदपाकरोति—**नापीति**॥ अनिश्चितपक्षवृत्ति-रसिद्धः। प्रकृते च दृश्यत्वस्य पक्षवृत्तिनिश्चयान्नासिद्धतेत्यर्थः। स्वरूपासिद्धिर्माभूदन्यतरा-सिद्धिस्तु भवत्येवेति विकल्पपूर्वमाशङ्कते—**प्रमाणेति**॥ प्रमाणभ्रान्तिसाधारणदृश्यता-सु-मात्रहेतुत्वेनान्यतरासिद्धित्वाभावाद्विशेषविकल्पेन च तदुद्भावने प्रसिद्धानुमानभङ्गप्रसङ्गादि-त्यभिप्रेत्य परिहरति—**न साधारणेति**॥ अतिप्रसङ्गमेव प्रकटयति—**तथाहीति**॥ अनेतद्देशकालः पक्षव्यतिरिक्तदेशकालनिष्ठः एतद्देशकालः पक्षसमानदेशकालः। **असिद्धिराद्य इति**। तर्कातिरिक्तदेशकालवर्तिनो धूमस्य पक्षावृत्तित्वादसिद्धिरित्यर्थः।

स्वाश्रयघातितया दृश्यत्वहेतुराश्रयासिद्धिमात्मनः स्वयमेवोपपादयतीति साम्प्रतम् । यदि हि आश्रयनिरुपाख्यतापादनमाश्रयघातिता, तन्न, अनभ्युपगमात् ।

**अथ** प्रतिपन्नस्य स्वभावानुपमर्देन सत्यविवेकापरपर्यायधर्मसाधनत्वं ; कथमाश्रयाभावः निरुपाख्यवैलक्षण्यादेवाश्रयतोपपत्तेः । निषेधकहेतोस्तु निषेधात्मनो निरुपाख्यमप्याश्रय एव । यथा हि वन्ध्यासुतो वक्ता न भवति, अचेतनत्वात् , पाषाणवत् इति । नावस्तुनि प्रमाणाविषयत्वेन विधिनिषेधयोः शक्यक्रियत्वमिति चेन्न, विधिव्यवहारविरहेऽपि तत्र

---

न-प्रपञ्चेऽनुभवसिद्धेत्यर्थः । प्रकारान्तरेणाश्रयासिद्धिमाशङ्क्य परिहरति—**न च स्वाश्रयेत्यादिना** ॥ ग्रन्थस्त्वयं स्पष्टार्थः । सत्याद्विवेकः, परिदृश्यमानः प्रपञ्चोऽयं सत्यो न भवतीति । अपरः पर्यायो यस्य बाध्यतालक्षणस्य धर्मस्य तस्य साधनं स्वाश्रयघातित्वं नामेति यदि तव मतं तदा नाश्रयासिद्धिशङ्कावकाश इत्याह—**कथमाश्रयाभाव इति** ॥ पूर्वं प्रपञ्चस्याप्रामाणिकत्वेऽपि निरुपाख्य-वैलक्षण्येनाश्रयत्व प्रत्यपादि संप्रति तु निरुपाख्यस्यापि क्वचिदाश्रत्वं दृष्टम् ; किमु वक्तव्यं सोपाख्यस्येति किंपुनर्न्यायमभिसन्धायाह—**निषेधकहेतोस्त्वित्यादिना** ॥ निषेधं करोतीति निषेधकः, तस्य निरुपाख्यमाश्रत इति श्राविते शब्दो न नित्यः, कार्यत्वादित्यत्र व्यभिचारःस्यात् तदर्थमाह—**निषेधात्मन इति** ॥ निषेधात्मनो नन्वनो हेतोर्निरुपाख्यमाश्रय इत्युक्ते नित्यः शब्दः, कृतकत्वात् इत्यत्र व्यभिचारः स्यात् ; तदर्थमाह—**निषेधके इति** ॥

---

सु-पक्षनिष्ठधूमस्य सपक्षे अभावात् साधनविकलो दृष्टान्तः स्यादित्यत आह—**द्वितीय इति** ॥ पर्यनुयोगसाम्यमभिधाय परिहारसाम्यमाह—**अविवक्षितविशेषमिति** । प्रमाणप्रतिपन्नस्यैवाश्रयत्वात् प्रकृते चैवंभावानभ्युपगमादाश्रयासिद्धिरित्यत आह—**न च प्रमाणेति** ॥ प्रतीतिगोचरमात्रस्याश्रयत्वे गगनारविन्दादेरपि सुरभितासाधनं प्रत्याश्रयत्व स्यादित्यत आह—**सुरभितेति** ॥ अनुपाख्यस्यैवानाश्रयत्वप्रयोजकत्वात् प्रमाणविरहोऽ-प्रयोजक इति भावः ।

तर्हि प्रमाणविरहादनुपाख्यत्वमपि स्यादित्याशंक्य बाधापातान्नैवमित्याह—**तद्वि-लक्षणतेति** ॥ ननु दृश्यत्वहेतुना बाध्यत्वरूपमिथ्यात्वसाधने प्रपञ्चस्यासत्यत्वपर्यवसानादाश्रय-घातितया आश्रयासिद्धो हेतुरित्याशंक्याश्रयघातित्वं विकल्प्य परिहरति—**न च स्वाश्रयेति** ॥ नाश्रयघातिशब्देन निरुपाख्यत्वापादनमनभ्युपगमात् । ज्ञानबाध्ययोग्यतासाधने पुनरर्थ-

निषेधव्यवहारदर्शनात् । तथा च वस्तुवदवस्तुन्यपि नासौ विसंवादी । यद्यवस्तुनि नायमस्तीत्यभिदधीत, तत्र कुत एतदिति पर्यनुयुक्तो यदि हेतुं कञ्चिदुपाददीत तदा कथमयं व्यवहारमात्रं निषेधेत् मूकीभावे तु न वादिनः प्रतिस्पर्धी ।

किञ्च नास्त्येवावस्तुनि निषेधव्यवहार इति वदन्नेवावस्तुनि निषेधव्यवहारमङ्गीकुरुते । न ह्यन्यो निषेधादर्थो नञः शक्यो निरूपयितुम् । विधिनिषेधव्यवहाराभावे

---

आत्मा न विनाशी कारणवत्त्वाभावादित्यत्र सोपाख्यस्याप्याश्रयत्वं दृष्टमभिप्रेत्यापिशब्दप्रयोगः । आश्रयो न भवतीति न, अपि त्वाश्रय एवेति अयोगव्यवच्छेदार्थ एवकारः । तत्रोदाहरणमाह—यथेति ॥ निरुपाख्यं न कस्यचिद्व्यवहारस्याश्रयः प्रमाणाविषयत्वात्; न यदेवं न तदेवम्; यथा सोपाख्यम्—इति व्यतिरेकप्रयोगं शङ्कते—नावस्तुनीति ॥ दर्शनविरुद्धमनुमानमिति परिहरति—न विधीति ॥ दर्शनं भ्रान्तमिति न वाच्यमित्याह —तथा चेति ॥ किंच निरुपाख्यस्य व्यवहाराश्रयत्वप्रतिषेधपर्यनुयोगादपि तस्य व्यवहाराश्रयत्वं सिध्यतीत्याह—यद्यवस्तुनीति । निषेधव्यवहारस्य प्रतिषेधलक्षणो व्यवहारः तवापि संमत इत्याह—किंचेति ॥ नन्ववस्तुनि निषेधव्यवहारो नास्तीत्यत्र नञो न निषेधार्थता; किन्तु " नेक्षेतोद्यन्तमादित्यम् " इत्यादिवदर्थान्तरपरतेत्याशङ्क्याह—न ह्यन्य इति ॥

क्रियासामर्थ्यस्यानपाकरणान्न निरुपाख्यवैलक्षण्येनाश्रयघातित्वमेव नास्तीत्यर्थः । प्रपञ्चस्य निरुपाख्यवैलक्षण्येनाश्रयत्वसंभवादाश्रयासिद्धिः परिहृता, इदानीं निरुपाख्यस्याश्रयासिद्धिनियमो नास्तीति प्रौढवादमवलंब्याह—निषेधकेति ॥ तदेव प्रपञ्चयति—तथाहीति ॥ प्रमाणप्रतिपन्ने धर्मिणि अग्निमान् भवति न भवतीति विधिनिषेधव्यवहारयोर्दर्शनादत्र चातथाभावादेतयोरसम्भव इति शङ्कते—नावस्तुनीति ॥ विधिव्यवहाराभावेऽपि अनुभवादेव निषेधव्यवहारविषयत्वमङ्गीकरणीयमिति दर्शयति—न विधीति । भवतु व्यवहारस्तथापि नभो नीलमिति व्यवहारवत् स भ्रम इत्याशंक्याविसंवादान्नैवमिति परिहरति—तथाचेति ॥ वस्तुवदिति ॥ मूके देवदत्ते वक्तृत्वाभावव्यवहारवद्वन्ध्यासुतेऽपि तद्व्यवहारो न विसंवादीत्यर्थः । अवस्तुनो निषेधव्यवहारविषयत्वाभावप्रतिज्ञायां हेत्वभिधाने परस्याप्याश्रयासिद्धिरुद्धतैव । अनभिधाने च कथायामप्रवृत्तिरेव स्यादिति युक्त्यन्तरमाह—यद्यवस्तुनीति । स्ववचनव्याघातादप्येवमङ्गीकरणीयमित्याह—किंच नास्तीति ॥ निषेधव्यवहारो नास्तीति निषेधव्यवहारस्यावस्तुन्यभ्युपगमादिति । नास्तीति नञः प्रतिषेधो नार्थः किंतु पर्युदास इत्यत आह—न ह्यन्यइति ॥ अनीक्षणमित्यत्र ईक्षणव्यतिरिक्तक्रियास्वीकारवदत्र

चावस्तुनि मूकताप्रसङ्गः । प्रमाणाविषयत्वेन चावस्तुनि विधिषेधयोरशक्यक्रियतेत्युक्तम् । तत्र प्रमाणाविषयत्वं, हेतुर्यद्यवस्तुनि वर्तेत, कथमाश्रयासिद्धिर्न भवेत् । यदि न वर्तेत कथमय आश्रये व्यवहारमात्रं निषेधेत ? प्रमाणाविषयत्वावृत्तौ च प्रमाणविषयत्वापातः । न च विधिनिषेधाववधूयान्यप्रकार व्यवहारः । तदुक्तम्—

" विधानं प्रतिषेधं च मुक्त्वा शाब्दोऽस्ति नापरः ।
व्यवहारः स चासत्सु नेति प्राप्तात्र मूकता ।" इति ।

प्रतिषेध एव नञः मुख्यार्थोऽनीक्षणादौ तु व्रतशब्दोपक्रमाल्लाक्षणिक इत्यर्थः । तथा चाह स्म भगवान् **भाष्यकारः**—" नञश्चैष स्वभावः यत्स्वसंबन्धिनोऽभावं बोधयति " इति । इतश्चावस्तुनि निषेधव्यवहारोऽभ्युपगन्तव्य इत्याह—**विधिनिषेधेति** ॥ पूर्व-मनुमानस्य दर्शनविरोधो दर्शितः, इदानीं दूषणान्तराभिधित्सया तदेवानुवदति—**प्रमाणाविषयत्वेनेत्यादिना** ॥ प्रमाणाविषयत्वादिति हेतुर्यदि निरुपाख्ये न वर्तते तदास्य प्रमाणविषयत्वमेवापद्यत इत्यसिद्धो हेतुः स्यादिति । द्वितीयविकल्पे दूषणान्तरमाह—**प्रमाणेति** ॥ यदुक्तं विधिनिषेधव्यवहारानङ्गीकारे मूकताप्रसङ्ग इति, तदसत्, व्यवहारान्तरसंभवादित्याशङ्क्याह— **न च विधीति** ॥ उक्तेऽर्थे साक्षित्वेन **धर्मकीर्तिवाक्यमाह**—**तदुक्तमिति** ॥ विधानं प्रतिषेधं च विहायापरः शाब्दो व्यवहारो

---

निषेधव्यवहारातिरिक्तव्यवहारविषयत्वानङ्गीकारादित्यर्थः ।

दूषणान्तरमाह— **विधिनिषेधेति** ॥ व्यवहारनिषेधप्रतिज्ञायां हेतुमात्राभिधाने-हेतोराश्रयासिद्धिरुक्ता । संप्रति दूषणान्तरं वक्तुं हेतुविशेषतामापादयति—**प्रमाणा-विषयत्वेन चेति** ॥ हेतोरवृत्तावपक्षधर्मतया न साध्यसाधकमित्याह—**यदि वर्तेतेति** ॥ दूषणान्तरमाह—**प्रमाणेति** ॥ प्रमाणविषयत्वाविषयत्वयोः परस्परविरोधादविषयत्वावृत्तौ प्रमाणविषयत्वमेव स्यादित्यर्थः ।

ननु हानोपादानातिरिक्तोपेक्षाव्यवहारान्तरं स्यादित्याशंक्य शब्दव्यवहारस्य विधि-निषेधत्वान्नैवमिति परिहरति— **नचेति** ॥ उक्तेऽर्थे बौद्धानां संमतिमाह—**तदुक्तमिति** ॥ प्रत्यक्षादावुपेक्षादिबुद्धिरूपस्यापि व्यवहारस्य संभवेन शाब्द इति विशेषणम् । आभासेनै-वाचेतनत्वादिना सति व्यवहारविषयत्वबाधपदाभावेनैव प्रमाणविषयत्वेन तन्निराकरणात् । तत्रैवाश्रयासिद्धिदोषोद्भावनमप्ययुक्तम् । दोषस्योभयत्रापि तुल्यत्वात् इति शङ्कते—

**यदपि मतम्**- न प्रमाणबुद्ध्या प्रमाणाविषयत्वादुपन्यासो, येन हेतोराश्रयासिद्धि-दोषावकाशः; किन्तु अचेतनत्वादिकमप्रामाणिकमुपन्यस्य परं व्यामोहयन्तं भवन्तं व्यामोहयितुमेवाप्रामाणिकोऽपि जल्पकथायां व्यवहारः । तदुक्तम्—"अहृदयवाचामहृदया एव प्रतिवाचो भवन्ति" इति । वादकथायां प्रमाणिकव्यवहारमुपेत्याभिहितं मूकतैवोचितेति ।

**तदप्यसत्** । तथा हि—परं व्यामोहयितुमिति कोऽर्थः? परमार्थतो वन्ध्यासुतावक्तृत्वानुमानस्यानिराकरणमिति चेत्, सिद्धं नः समीहितम् । वास्तवनिराकरणे

नास्ति । स चासत्सु निरुपाख्येषु नास्तीति चेदुच्यते तदा मूकतैवात्र प्राप्तेत्यर्थः । यदवादि प्रमाणाविषयत्वं हेतुः यद्यवस्तुनि वर्तते तदाप्याश्रयासिद्धिः समानेति तत्परिजिहीर्षया चोद्यमुद्भावयति—**यदपि मतमित्यादिना** ॥ परव्यामोहापादनं पण्डितानां न मण्डनमित्याशङ्क्याह—**अप्रामाणिक इति** ॥ छलजातिनिग्रहस्थानसाधनोपालम्भः पक्षप्रतिपक्षपरिग्रहो हि जल्पः । तस्य परव्यामोहार्थत्वादप्रामाणिकोऽपि व्यवहारो न विरुध्यत इत्यर्थः । **उदयनो**ऽपीदं जगादेत्याह—**तदुक्तमिति** ॥ जल्पे अहृदयवाचामप्रामाणिकवाचामनाप्तानां अहृदया एव छलजात्यादिरूपाः प्रतिवाचो भवन्तीत्यर्थः । ननु यद्यप्रामाणिकोऽपि व्यवहारः संभवति, तर्हि कथमभिहितं मूकतैवोचितेति, तत्राह—**वादकथायामिति** ॥ प्रमाणतर्कसाधनोपलम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो **वादः** इति तस्य तत्त्वनिर्णयावसानत्वात्तदनुपयोग्यमिधाने मूकताभिधानमित्यर्थः । नचैवमप्रतिभा उत्तरानर्हे तदभावात् । शङ्कितं मतं प्रत्याख्याति—**तदप्यसदिति** ॥ निरुपाख्यस्यापि निषेधव्यवहाराश्रयत्वं संभवतीति नोऽस्माकं समीहितं सिद्धमित्यर्थः । अथ परस्य व्यामोहापादनं नाम परमार्थतो वन्ध्यासुतो वक्ता न भवतीत्यस्य निराकरणं तत्राह—**वास्तवनिराकरण इति** ॥ यश्चावोचो जल्पस्य व्यामोहार्थत्वादप्रामाणिको

**यदपि मतमिति** ॥ यथोक्तोपपन्नः छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प इत्यक्षपादसूत्राज्जल्पापरनामधेयविजिगीषुकथायां जल्पादीनामपि साधनत्वोपन्याससंभावाददोष-इत्यर्थः । आभासेन प्रत्यवतिष्ठमानं प्रत्याभासोपन्यासो युक्त इत्यत्राभियुक्तसंमतिमाह—**तदुक्तमिति** ॥

भवतु जल्पकथायामेवं तत्वनिर्णयफलायां तु वादकथायां शिष्टादीन् प्रति नाभासोपन्यासो युक्त इत्यत आह—**वादकथायामिति** ॥ प्रश्नस्यायोग्यविषयत्वादनुत्तरमेवोत्तरमित्यर्थः ।

तु नायमप्रामाणिको व्यवहारः । न च जल्पेऽपि सर्वस्याप्रामाणिकाद्व्यवहारात् व्यामोहः संभवी ; विमलचेतसो वचनमात्रेणाव्यामोहात् ; तत्र जल्पेऽपि मूकताऽप्राप्तेः । अवक्तृत्वानुमानं तु न व्यामोहहेतुरस्माभिराश्रीयते इति न समौ पर्यनुयोगपरिहारौ । तदेवमनुपाख्यस्यापि आश्रयतोपपत्तिरिति स्थितम् । किं पुनः सोपाख्यस्यासत्यपि मानसंबन्धे ।

नापि भागासिद्धः पक्षव्यापित्वात् । नाप्यन्यथासिद्धः, निरुपाधिकत्वात् । न च बाधितत्वमुपाधिः, तस्यैव मिथ्यापदार्थतया साध्यताभिधानात, साध्यस्य चानुपाधित्वात् ।

व्यवहारः संभवतीति. तत्राह--**न च जल्पेऽपीति** ॥ मूढचित्तोहि यत्किञ्चिज्जल्पिते तूष्णीमास्ते न पण्डित इत्यर्थः । ननु वन्ध्यासुतो वक्ता न भवतीत्यनुमानं त्वयापि परव्यामोहार्थं उपन्यस्तम् । तत्रापि परं व्यामोहयितुमिति कोऽर्थः ? किं परमार्थतो निरुपाख्यस्यानाश्रयत्वानिराकरणमुत निराकरणम् ? प्रथमे सिद्धं नः समीहितम् । चरमे नायमाप्रामाणिको व्यवहारः इति तावच्चोद्यं समानम् । यस्तव परिहारः स एवास्माकमपि भविष्यतीत्याशङ्क्याह—**अवक्तृत्वानुमानं त्विति** ॥ प्रकृतं निगमयति–**तदेवमिति** ॥ तस्मान्नाश्रयासिद्धिः । तर्हि दृश्यत्वहेतुः प्रपञ्चान्तर्गतोऽपि स्वात्मनि न वर्तत इति भागासिद्धिरित्याशङ्क्याह–**नापि भागासिद्धः इति** ॥ दृश्यत्वं हि उपाधियोगात्प्रवर्तमानं स्ववृत्तितायामपि न क्षतिमावहति । यद्वस्तु तत्स्वातिरिक्तवेद्यमिति व्याप्तिवदित्यर्थः । ननु दृश्यत्वमिथ्यात्वयोः निरुपाधिकसंबन्धाभावादन्यथासिद्ध इत्याशङ्क्याह–**नाप्यन्येथति** ॥ दृश्यत्वमिथ्यात्वयोरनौपाधिकसंबन्धादित्यर्थः । पराभिमतमुपाधिमनूद्य पराकरोति-- **न चेत्यादिना** ॥ विवादपदं दोषगम्यम्, दृश्यत्वात् शुक्तिरूप्यवत् इति । दोषगम्यत्वस्य

तदेतद्विकल्प्य दूषयति—**तदप्यसदिति** ॥ अवक्तृत्वानुमानस्य वस्तुतः किमनिराकरणं उतनिराकरणमिति विकल्पार्थः । द्वितीयं दूषयति—**वास्तवेति** ॥ परमार्थतो निराकरणस्य प्रमाणाधीनत्वात् अत्राश्रयासिद्धिदोषेण प्रमाणत्वाभावात् । न च भवतोऽप्याश्रयासिद्धिस्तुल्येति वाच्यम् ; मया प्रमाणप्रतिपन्नस्यैवाश्रयत्वनियमानङ्गीकारादिति भावः । यदुक्तं-परं व्यामोहयितुमुपन्यास इति तदेतद्दूषयति – **न च जल्पेऽपीति** ॥ उत्तमबुद्धीनां व्यामोहाभावात्तद्व्यामोहकतया वचनप्रयोगस्य जल्पकथायामनुपपत्तेः । तत्रापि मूकतैव पर्यवस्येदित्यर्थः । यदुक्त-परं व्यामोहयंतमिति तदपि नास्तीत्याह—**अवक्तृत्वेति** । अवान्तरप्रमेयमुपसंहरति---**तदेवमिति** ।

ननु दृशेः प्रत्यक्षवचनतया दृश्यत्वादिति प्रत्यक्षग्राह्यत्वोक्तेर्भागासिद्धिः स्यादित्याशंक

नापि दोषगम्यत्वम्, साधनव्यापकत्वात्; तथाभावे चानुपाधित्वात्; इन्धनभेदस्याप्यन्यथा धूमोपाधितापातात्। उपाधिश्च साधनाव्यापकत्वे सति साध्यसमव्याप्तिः।

साधनव्यापकत्वादनुपाधित्वमित्यर्थः। **तथाभावे चेति**॥ साधनव्यापकत्वे सति उपाधित्वासंभवादित्यर्थः॥ विपक्षे दोषमाह—**इन्धनभेदस्यापीति**॥ साधनव्यापकस्याप्युपाधित्वे सत्यार्द्रेन्धनत्वस्यापि धूमोपाधित्वप्रसङ्गादग्निधूमयोरप्यनौपाधिकः संबन्धो न स्यादित्यर्थः। उपाधिलक्षणविरहाच्च न दोषगम्यत्वमुपाधिरित्याह—**उपाधिश्चेति**॥ साध्यसमव्याप्तिरुपाधिः इत्युक्तेऽनित्यः शब्दः सामान्यवत्त्वे सति अस्मदादिबाह्येन्द्रियग्राह्यत्वादित्यत्र कृतकत्वमुपाधिः स्यात्; तदर्थमाह—**साधनाव्यापकत्वे सतीति**॥ यथा स मैत्रीतनयः श्यामो मैत्रीतनयत्वात, गृहस्थितमैत्रीतनयवत् इति। अत्र शाकाद्याहारपरिणतिपूर्वकत्वमुपाधिरिति। ननु दोषगम्यत्वस्य न साधनव्यापकता, तत्र मिथ्यात्वस्योपाधित्वात्; न, इतरेतराश्रयत्वप्रसङ्गात्। तथाहि—दोषगम्यत्वस्योपाधित्वे मिथ्यात्वं साधनाव्यापकत्वेनोपाधिर्भवति मिथ्यात्वस्य चोपाधित्वे सिद्धे दोषगम्यत्वमपि तथैवोपाधिरिति।

तत्रोपलब्धिमात्रवचनत्वान्मैवमिति परिहरति—**नापीति**॥ व्याप्यत्वासिद्धिरपि नास्तीत्याह—**नाप्यन्यथेति**॥ साधनान्तराधीनसाध्यसंबन्धाभावान्न भवतीत्यर्थः। तत्र हेतुः **निरुपाधित्वादिति**॥ अस्तु साधनताभिधानं तथापि कथमनुपाधित्वमित्यत आह—**साध्यस्य चेति**॥ साध्यस्योपाधित्वे सर्वानुमानभङ्गप्रसङ्गादित्यर्थः। साधनव्यापकत्वेऽपि कथमुपाधित्वाभाव इत्यत आह—**तथाभाव इति**॥ उपाधिलक्षणरहितत्वादित्यर्थः। साध्यव्यापकस्योपाधित्वे दोषमाह—**इन्धनभेदस्येति**॥ धूमवत्त्वेन वह्निमत्वसाधनवदिन्धनविशेषस्यापि साधयितुं शक्यतयास्यानुपाधितावद्दोषगम्यस्याप्यनुपाधित्वमित्यर्थः। निरुपाधित्वप्रतिपादनोपयोगितया उपाधिलक्षणमाह—**उपाधिश्चेति**॥ साध्यसमव्याप्त इत्येतावन्मात्राभिधाने सामान्यवत्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वादनित्यश्शब्द इति साधने कृतकत्वमप्युपाधिःस्यात्। यत्रानित्यत्वं तत्र कृतकत्वं, यत्र कृतकत्वं तत्रानित्यत्वमिति साध्येन समव्याप्तः, अत उक्तं—**साधनाव्यापक इति**॥ सामान्यवद्व्यापकत्वादिति हेतुना अनित्यत्ववत् कृतकत्वस्यापि साधयितुं शक्यतया साधनाव्यापकत्वाभावेनानुपाधित्वमित्यर्थः। साधनाव्यापकत्वमात्राभिधाने चानित्यत्वमात्राभिधाने चानित्यत्वे शब्दान्यत्वमुपाधिः स्यात्। शब्दे सामान्यवत्वादिति हेतुनाऽसत्यपि शब्दानित्यत्वाभावेन साधनाव्यापकत्वादत उक्तं, **साध्यसमव्याप्त इति**॥ अप्रयोज-

मिथ्यात्वं मा भूत्, दृश्यत्वं च भविष्यति—इति को दोषः। तथा च विपक्षे बाधकानुकूलतर्काभावात् अप्रयोजको हेतुः इति चेत्, न; सत्यत्वे जडस्य दृश्यत्वानुपपत्तेः। न तावत् स्वदृश्यत्वम्, जडताहानेः स्ववृत्तिविरोधाच्च। नापि स्वातिरेकिदर्शनदृश्यत्वम्, संसर्गानिरूपणात्। न च दृक्संसर्गमन्तरेण दृश्यं दृष्टमिति युज्यते, अतिप्रसङ्गात्। संसर्गस्तु न संसर्ग्यतिरेकी, तस्य संसर्गिसंसर्गेऽनवस्थानात्; असंसर्गे तत्संसर्गि

तस्मात्सूक्तं साधनव्यापकत्वादनुपाधित्वमिति। साधनव्यापकत्वं च स्वसिद्धान्ते दृश्यदृष्टेरविद्यादोषोत्थतया इत्यवगन्तव्यम्।

इदानीं दृश्यत्वहेतोरप्रयोजकत्वं शङ्कते—**मिथ्यात्वमित्यादिना**॥ परिहरति—**न सत्यत्वे इति**॥ जडस्य दर्शनानुपपत्तेः व्यवहाराभङ्गप्रसङ्गो बाधक इत्यर्थः। सत्यत्वेऽपि जडस्य दृश्यत्वं संभवतीति वदन् प्रष्टव्यः—किं स्वयमेव जडः स्वात्मानं पश्यतीति दृश्यत्वं, किं वा स्वातिरिक्तेन दर्शनेन दृश्यत्वमिति; नोभयथापि तदुपपत्तिरित्याह—**न तावदित्यादिना**॥ ननु दृश्यदर्शनयोः संसर्गमन्तरेणापि ज्ञानादेवार्थावभासो भविष्यतीत्याशङ्क्याह—**न च दृशीति**॥ **अतिप्रसङ्गादिति**॥ घटज्ञानाद्विन्ध्यादीनामवभासप्रसङ्गात्। संबन्धाभावाविशेषादित्यर्थः। अथैतद्दोषभीत्या दृश्यदर्शनयोः संसर्गं मन्यसे तर्हि संसर्गः संसर्ग्यतिरेकी किं वाऽनतिरेकी किं वातिरेकानतिरेकीति पृष्टो भवान् व्याचष्टाम्। क किं स्यादिति चेत् तत्र न तावदाद्योऽनवद्य इत्याह—**संसर्गस्त्विति**॥ तत्रापि वक्तव्यं—अतिरिक्तसंसर्गस्य किं संसर्गिभ्यां संसर्गोऽस्ति,

---

कत्वमाशङ्कते—**मिथ्यात्वमिति**। यथा शब्दलिङ्गेनाकाशसाधने तस्यैव लाघवमनेकत्वे गौरवमनुकूलतर्कप्रतिकूलतर्कौ, नैवं प्रपञ्चस्य सत्यत्वे बाधको मिथ्यात्वे चानुकूलतर्क उपलभ्यते। (न)बाधकतर्कानुकूलतर्काभावादप्रयोजक इत्यर्थः। परिहरति—**सत्यत्व इति**॥ प्रपञ्चसत्यत्वे किं स्वदृश्यत्वमुत परदृश्यत्वमिति विकल्प्याद्यं दूषयति—**न तावदिति**॥ स्वप्रकाशत्वेनात्मवज्जडत्वं न स्यादित्यर्थः। दूषणान्तरमाह—**स्ववृत्तीति**॥ कर्मकर्तृत्वयोरेकत्र विरोधादित्यर्थः। द्वितीयं दूषयति—**नापीति**॥ माभूत्संसर्ग इति तत्राह—**न चेति**॥ घटज्ञानस्याघटेनासंबन्धस्यापि तद्व्यवहारजनकत्वे पटादिष्वपि व्यवहारजनकता प्रसज्येत। ज्ञानस्य पटं प्रत्यविशेषात्। न च पटेन विशेषितत्वमेव विशेषः मूलसंबन्धाभावे तद्विशेषस्याप्यनुपपत्तेः इत्यर्थः। अस्तु तर्हि संबन्ध इत्याशंक्य संबन्धिभ्यां भिन्नोऽभिन्नो वा इति विकल्प्याद्यं दूषयति—

इत्यनुपपत्तेः । अनतिरेके वस्तुनी एव इति, न संसर्गो नामेति स्यात् । अतिरेका-
नतिरेकौ तु विरुद्धौ ।

संयोगादिविकल्पायोगाच्च । न तावत् दृश्यदर्शनयोः संयोगः,
दर्शनस्याद्रव्यत्वात् । नापि समवायः, दर्शनस्य आत्मैकगुणाभिमतस्य घटादिना
तद्योगात् । तादात्म्यमपि द्रवकठिनवद्विरुद्धस्वरूपयोर्जडाजडयोः कथं स्यात्?
विषयविषयिभावमपि न तत्त्वतो जानीमः; तस्य हि द्रव्यादिष्वन्तर्भावे सामान्यादिभिः सह

---

न वा? अस्तित्वे तस्य तस्यान्योन्यः संसर्ग इत्यनवस्था स्यात्; अतिरिक्तस्य संसर्गस्य
संसर्गिभ्यां संसर्गाभावे च तयोः संसर्ग इति न स्यादित्यर्थः । द्वितीयतृतीयविकल्पदूषणं
स्पष्टम् । साधारण्येन संसर्गे दूषणमभिधाय विशेषतो दूषयति—**संयोगादीति** ॥
दृश्यदर्शनयोः संबन्धः किं संयोगः, समवायो वा, तादात्म्यं वा, विषयविषयिभावो वा, आहो-
स्विदेकान्तः करणसंक्रान्तिर्वेति विकल्पे क्रियमाणे अयोगाच्चेत्यर्थः । तत्राद्यस्यायोगमाह
—**न तावदिति** ॥ संयोगो हि गुणः; स च द्रव्याश्रय एव । न च दर्शनं
द्रव्यमभिमतमित्यर्थः । द्वितीयं दूषयति—**नापीति** ॥ अयुतसिद्धानामाधाराधेयभूताना-
मिहप्रत्ययहेतुः यः संबन्धः समवाय इति भाष्यते । न च दर्शनं घटाद्याधारं येन तत्र
समवेयादित्यर्थः । तृतीयं दूषयति—**तादात्म्यमपीति** ॥ चतुर्थं दूषयति—
**विषयविषयिभावमपीति** ॥ तत्र वक्तव्यं द्रव्यगुणकर्मसामान्यविशेषसमवायात्मकं किल
वैशेषिकसमये विश्वम्; तेषु किमयमन्तर्भूतोऽनन्तर्भूतो वा? प्रथमं पराकरोति—**तस्य**

---

**संसर्गस्त्विवति** ॥ संसर्गस्य संसर्गिभ्यामसंबन्धे न तत्संसर्ग इति ताभ्यां विशेषितत्वं न
स्यादित्याह—**असंसर्ग इति** ॥

रीयं दूषयति—**अनतिरेक इति** ॥ अस्तु तर्हि भिन्नाभिन्नः संबन्ध इत्यत आह
—**अतिरेक इति** ॥ ननु घटादिषु यादृशो व्यावहारिकः संबन्धस्तादृश एव भविष्यतीत्यत
आह—**संयोगादीति** । आदिशब्देन समवायतादात्म्ये गृह्येते । **अदृश्यत्वादिति** ॥
सत्यवादिना ज्ञानस्य गुणत्वेनाभ्युपगमादित्यर्थः । अस्तु तर्हि विषयविषयिभावः संबन्ध इत्यत
आह—**विषयविषयिभावमिति** ॥ विषयविषयिभावस्य द्रव्यगुणकर्मस्वभावत्वे
सामान्यादिपदार्थत्रयस्य ज्ञानेन विषयविषयिभावो न स्यात्, द्रव्यगुणकर्मणां सामान्यादि-
पदार्थत्रयवृत्तित्वाभावात् सामान्यादिपदार्थत्रयान्तर्भावे च सामान्यादिष्वेतज्ज्ञानविष-
यविषयिभावो न स्यात् । सामान्ये सामान्यस्य विशेषे विशेषस्य समवाये समवायस्य

तत्संवेदनस्य संसर्गो न स्यात्। अनन्तर्भावेऽस्य योगस्य कृतान्तविरोधः।

योऽप्यदृष्टादिवशात् कर्मकारकं विषयः तज्जनितं तज्ज्ञानं विषयीति ब्रूयात्, तस्यापीश्वरज्ञानस्याविषयित्वप्रसङ्गः तस्य नित्यत्वात् अस्मदादिज्ञानस्यापि अतीताद्यर्थैः

---

हीति ॥ विषयविषयिभावस्य द्रव्यादिष्वन्तर्भावे स्वीक्रियमाणे सामान्यादिभिः सह सामान्यादि संवेदनस्य यो विषयविषयिभावलक्षणः संबन्धः स न स्यात्। संबन्धस्याप्याश्रयत्वात् द्रव्यादिषु चान्तर्भूतस्य द्रव्याद्यात्मकत्वात्, द्रव्यादीनां सामान्याद्याश्रितत्वं अभ्युपगमविपरीतं अनिष्टं प्रसज्यते इत्यर्थः। तथाहि—गुणाश्रयो द्रव्यमुच्यते। तत्र विषयविषयिभावस्यान्तर्भूतत्वे द्रव्यस्य सामान्याश्रितत्वं अभ्युपगमाविपरीतमनिष्टमापद्यते संबन्धस्य द्विनिष्ठत्वात् ज्ञानाश्रयत्वमप्यापद्यते। तथा सामान्यवानगुणो गुणः संयोगविभागयोः अनपेक्षकारणं कर्म तदन्तर्भूतत्वे विषयविषयिभावस्य गुणस्य तदन्तर्भूतत्वे विषयविषयिभावस्य कर्मणः सामान्याद्याश्रितत्वप्रसङ्गः; तथा अनुगतप्रत्ययकारणं सामान्यं तदन्तर्भूतत्वे विषयविषयिभावस्य सामान्यस्य सामान्याद्याश्रितत्वप्रसङ्गः। तथा व्यावृत्तप्रत्ययकारणं विशेषाः। ते च द्विविधाः। सामान्यविशेषाः घटत्वादयो, नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः, तदन्तर्भूतत्वे विषयविषयिभावस्य विशेषाणां सामान्याद्याश्रितत्वप्रसङ्गः। तथा समवायान्तर्भूतत्वे विषयविषयिभावस्य समवायस्य तत्संवेदनेन संबन्धो न स्यात् समवायस्य समवायाश्रितत्वप्रसङ्गात् इति ॥ **अन्ये** त्वेवं व्याचक्षते—विषयविषयिभावः किं द्रव्यादित्रिकेऽन्तर्भूतः, किं वा सामान्यादित्रिके न तावत्सामान्यादित्रिके, सामान्यादित्रिकस्य नित्यत्वेन विषयविषयिभावस्यापि नित्यत्वापातात्। यदि द्रव्यादित्रिके, तत्राह—**तस्य हीति** ॥ तदसदित्यन्ये। षट्स्वप्यन्तर्भावस्यानेनैव ग्रन्थेन दूषणे संभवति विकल्प्य बहिर्दूषणाभिधाने गमकादर्शनात्। तथा वास्तु सर्वथापि परपक्षप्रतिक्षेपात्। ननु द्रव्यादिभिः

---

चाभावादित्यर्थः।

अस्तु तर्हि षट्पदार्थबहिर्भावे को दोष इत्यत आह—**अनन्तर्भाव इति** ॥ विषयविषयिभावस्य भावरूपतया षट्पदार्थबहिर्भावे अपसिद्धान्त इत्यर्थः। न चासावभाव एवान्तर्भूत इति वाच्यम्—अभावे अभावान्तराभावेनाभावस्यैव विषयत्वानुपपत्तेः। अस्तु तर्हि ज्ञानज्ञेययोर्विषयजन्यजनकभाव एव विषयविषयिभाव इति शङ्कते—**योऽपीति**। अस्यैवार्थस्य एतज्ज्ञानं प्रति जनकत्वमिति नियमः कुत एतदित्यत आह—**अदृष्टादिवशादिति** ॥ आदिशब्देन विषयेन्द्रियसन्निकर्षेश्वरादि गृह्यते। तदेतदव्याप्त्या दूषयति—**तस्यापीति** ॥

असंसर्गप्रसंगः नचापरः प्रकारः संभवी । संभवे वा कथं प्रध्वस्तानागतयोः तत्संभवः ? न चास्ति संभवः, नास्ति संसर्गी, संसर्गश्चास्तीति । न च दृश्यदर्शनयोः एकान्तःकरणसंक्रान्तिः संसर्गः, चितेः तात्त्विकसंक्रमायोगात्,

---

तत्संवेदनस्य संबन्धो न स्यादिति किमिति नोक्तं ? सामान्यादित्रयान्तर्भूतस्य द्रव्यादित्रयाश्रितत्वसंभवादिति ब्रूमः । द्वितीयपक्षे सप्तमपदार्थस्वीकारः सिद्धान्तक्षयावहः प्रसज्येतेत्यर्थः । न वस्तुभूतोऽयं संसर्गो येनान्तर्भावानन्तर्भावादिचिन्तावतारः इत्यभिप्रेत्य शङ्कामुद्भावयति—**योऽपीत्यादिना** ॥ न केवलस्येश्वरज्ञानस्य नित्यत्वाद्विषयजन्यत्वाभावादविषयित्वप्रसङ्गोऽस्मदादिज्ञानस्याप्यतीताद्यर्थैः सह संसर्गो न स्यात् अविद्यमानत्वेनाजनकत्वादित्यर्थः । ननु विषयस्य जनकत्वेन चेद्विषयविषयिभावो न घटते मा घटिष्ट तथापि प्रकारान्तरेण भविष्यतीत्याशङ्क्याह—**न चापर इति** । संसर्ग्याश्रयो हि संसर्गो नाम भवति । न चाश्रयाभावेऽप्याश्रितं संभवतीति । असंभवमेव प्रकटयति—**न चास्तीति** ॥ पञ्चमविकल्पं दूषयति—**न च दृग्दृश्ययोरिति** ॥ मुद्राप्रतिमुद्रान्यायेन विषयस्यान्तःकरणे यद्यप्यनुप्रवेशः संभवति तथापि दृशो न तात्त्विकमन्तःकरणे संक्रमणं घटत इत्यर्थः । ननु यद्यपि सर्वगतत्वात् कूटस्थत्वाच्च चितेस्तात्त्विकं संक्रमणं नोपनीपद्यते तथापि चित्सन्निधानात् तदाकारमन्तः करणं संभवतीति संक्रमणमुपचर्यत

जन्यज्ञानेष्वयं संबन्ध इत्याशंक्य तत्राप्यतिव्याप्तिरेवेति परिहरति—**अस्मदादीति** ॥ तेषां पूर्वक्षणे विद्यमानतया ज्ञानजनकत्वाभावादित्यर्थः । अस्तु तर्हि ज्ञानजन्यफलाधारत्वं विषयत्वं, तज्जनकत्वं विषयित्वमिति तत्राह—**नचापर इति** । फलशब्देन ज्ञातताभिधाने तत्रैव ज्ञातताजननाद्यत्रेति नियामकसंबन्धविरहे तस्यातिप्रसक्तत्वात् संबन्धस्वीकारे ज्ञाततोपन्यासस्य वैयर्थ्यादित्यर्थः । अत्राप्यव्याप्तिस्तदवस्थेत्याह— **संभवेति** ॥ असम्भवमेव दर्शयति—**नचास्तीति** ॥ नचातीतेष्वपि तत्तत्सामान्यस्य विद्यमानतया तत्र ज्ञातता भवतीति वाच्यम्; आसीदस्ति भविष्यति वृष्टिरित्युक्तेरव्यवहारत्वप्रसङ्गात् । न च ज्ञानं प्रतिबद्धहानादियोग्यत्वं विषयत्वं, हानोपादानोपेक्षादिव्यवहारस्य प्रत्येकमव्यापकत्वात् । समुच्चितरूपस्यैकत्रासंभवेनासंभवित्वात् । हानादिषु हानान्तरस्वीकारेऽनवस्थापातात्, अस्वीकारे चाविषयत्वादित्यर्थः ।

सांख्यपक्षमाशंक्य निराकरोति—**न च दृश्येति** । अन्तःकरणसंबन्धः पारमार्थिको न वेति विकल्प्याद्यं दूषयति—**चितेरिति** ॥ तत्र हेतुरविक्रियत्वादिति ।

अविक्रियत्वात्, अतात्विकसंक्रमेऽप्यलीकसंसर्गप्रसङ्गात् अतात्विकतापत्तिः। दृश्यदृष्टेः असत्यपरसंसर्गे निरूप्यनिरूपकभावो भवेदिति चेन्न, तथा सति मूलसंबन्धाभावे सौधसितिम्नोऽपि परिणततालफलकालिम्ना निरूपणापातात्। अभाववदिति चेत्, न, अनभ्युपगमात्। न ह्यभावस्याप्यसति संसर्गे तात्त्विकं प्रतियोगितानिरूपणमभ्युपगच्छामः। तस्माच्चिदात्मन एवैकस्यानाद्यविद्यावशादविचारितरमणीयोऽयमतदाकाराभास इत्यवदातम्।

इत्याशङ्कयाह—**अतात्विकसंक्रमे त्विति** ॥ संसर्गस्यालीकत्वेन तत्कार्यं दृश्यदृष्टिरप्यतात्त्विकीति प्रसज्यत इत्यर्थः। तस्मान्न कश्चिद्दृश्यदर्शनयोः तात्त्विकः संसर्गो निरूपयितुं शक्यत इति। यद्यप्यपरः संयोगादिलक्षणः संबन्धो नास्ति दृश्यदर्शनयोः, तथापि निरूप्यनिरूपकभावो भवेत् ज्ञेयाधीननिरूपणत्वात् ज्ञानस्येत्याह—**असत्यपीति** ॥ अवान्तरसंबन्धमन्तरेणापि यदि निरूप्यनिरूपकभावो भवेत् तदा सौधसितिम्नोऽपि परिणततालफलकालिम्ना निरूपणमापद्यत इति परिहरति—**न तथा सतीति** ॥ यद्यपि भावाभावयोः संयोगादिलक्षणः संबन्धो न संभवति तथापि प्रतियोगिना अभावस्य निरूपणं दृश्यते घटस्याभाव इति, तथा घटस्य दर्शनमिति भविष्यति निरूप्यनिरूपकभाव इति शङ्कार्थः। न, तत्रापि संबन्धमन्तरेण निरूप्यनिरूपकभावस्यानभ्युपगमात्। एवं हि भावाभावयोः अप्याध्यासिकः संबन्ध इति भावः। यदुक्तप्रकारेण संबन्धो निरूपयितुं न शक्यते; कथं तर्हि तवापि दृश्यदर्शनभाव इत्याशङ्कामपनयन्नुपसंहरति---**तस्मादिति** ॥ **नापीत्यादिः** स्पष्टार्थः ॥ साध्यविपर्ययव्याप्तो विरुद्धः पक्षत्रयवृत्तिः

---

विकारवतामेव घटादीनां संबन्धो नाविक्रियस्यात्मन इत्यर्थः। द्वितीयं दूषयति—**अतात्विकेति** ॥ अलीकसंसर्गप्रसङ्गात् दृश्यदृष्टिरतात्विकी स्यादित्यर्थः। असत्येव घटाभावभूतलयोः संयोगादिसंबन्धे निर्घटं भूतलं भूतले घटाभाव इति निरूप्यनिरूपकभाववदसत्येव ज्ञानार्थयोः संबन्धे ज्ञातो घटो घटस्य ज्ञानमिति निरूप्यनिरूपकभावो भवेदिति शङ्कते—**असतीति** ॥ परस्मिन्नपि संबन्धे असतीति यावत्। एतदतिप्रसङ्गेन दूषयति—**तथासतीति** ॥ तत्रापि संबन्धाभावे परमार्थतो विशेषणविशेष्यभावानुपपत्तेः। अन्यथा अतिप्रसङ्गात्। प्रतीतेस्तु नभोनीलिमप्रतीतिवत् भ्रमत्वेनाप्युपपत्तेः। समवायेतरेतराभावयोर्विशेषणविशेष्यभावस्य च मूलसंबन्धगर्भत्वाभ्युपगमे तदभावेनानुपपत्तेरित्यर्थः। प्रतियोगितदभावयोरिव निरूप्यनिरूपकभावः स्यादिति शङ्कते—**अभाववदिति** ॥ दृष्टान्तासिद्धया परिहरति—**नानभ्युपगमादिति** ॥ न च तत्रापि घटनिवर्त्यत्वं घटजनकत्वं

तदेवं नाप्रयोजक इति स्थितम् ॥

नापि विरुद्धः, साध्यविपर्ययाव्याप्तत्वात् । ननु दृश्यता सत्यताव्याप्तेति **प्रभाकरः** । सत्यम् । तमपि दुराचारमख्यातिनिराकरणेनाग्रे निर्भर्त्सयिष्यामः । नाप्यनैकान्तिकः, व्यभिचारासंभवात् । न चात्मनि सत्येऽपि दृश्यतास्तीति वाच्यम्, तस्यापराधीनप्रकाशत्वात् । तदेव कथम्? ममेदमनुकूलं प्रतिकूलमिति वा विज्ञानस्याविच्छिन्नप्रकाशत्वेनावच्छेदकात्मप्रकाशनान्तरीयकत्वात्; तस्य च मानसवेदनीयतायां

---

अनैकान्तिकः । पक्षत्रयं च सन्दिग्धो धर्मो यस्य सिषाधयिषितोऽसौ पक्षः, साध्यमानो धर्मो यत्र संमतः स सपक्षः । साध्यमानो धर्मो यत्र नास्ति स विपक्ष इति विभागः । यद्यात्मनः स्वयंप्रकाशत्वे किंचित्प्रमाणं भवेत्, भवेत् तदाऽनैकान्तपरिहारः । तदेव तु न दृश्यत इत्याह—**न, तदेव कथमिति** ॥ "अत्रायं पुरुषः स्वयं ज्योतिः भवति" इत्यागमस्तावत्प्रसिद्ध एव । तदनुगुणमनुमानमप्युपन्यस्यति—**ममेदमित्यादिना** ॥ ममेदमनुकूलं प्रतिकूलमिति वा विज्ञानं विशेषणप्रकाशनान्तरीयकं विशिष्टप्रकाशत्वात् यो विशिष्टप्रकाशः स विशेषणप्रकाशनान्तरीयकः दृष्टः यथा दण्डीति प्रकाशः तथा चायं तस्मात्तथेत्यर्थः विशेषणभूतश्चात्रात्मा स्वशब्दाभिधेय इत्यर्थः । नन्वस्मादात्मनः प्रकाशमात्रं सिध्यति, न स्वतस्त्वम्; सत्यम्; परिशेषात् स्वतस्त्वं सेत्स्यति; परिशेषश्च प्रसक्तस्य प्रतिषेधेऽन्यत्राप्रसङ्गात् शिष्यमाणे संप्रत्ययः । इदानीं प्रसक्तप्रतिषेधं करोति—**तस्य चेत्यादिना** ॥ आत्मनो मनस्संवेदनीयतायामङ्गीक्रियमाणायां स्वाश्रय-

घटसमानाधिकरणत्वं घटाश्रयत्वमिति घटप्रागभावप्रध्वंसान्योन्याभावादीनामस्त्येव मूलसंबन्धः इति वाच्यम्—तेषां प्रत्येकमव्यापित्वान्मिलितरूपस्यैकत्वासंभवादत्यन्ताभावेन प्रतियोगिसमानाधिकरणत्वस्य वक्तुमशक्यत्वादित्यर्थः ।

अवान्तरप्रमेयमुपसंहरति—**तस्मादिति** ॥ यस्मात् सत्यत्वे दृश्यत्वानुपपत्तिः, तस्मान्मिथ्यात्व एव दृश्यत्वं संभवतीति भावः । महाप्रमेयमुपसंहरति—**तदेवमिति** ॥ साध्यविपर्ययाव्याप्तत्वमसिद्धं गुरुमते सत्यस्य दृश्यत्वनियमादित्याशंक्याह—**नन्विति** ॥ सत्येऽप्यात्मनि दृश्यत्वहेतुसंभवादनैकान्तिकत्वमित्याशंक्याह— **नचात्मनीति** ॥ परिशेषानुमानेन स्वप्रकाशत्वं साधयति—**ममेदमिति** ॥ आत्मविशेषितानुकूलादिप्रत्यये विशेषणीभूतात्मप्रकाशपुरस्सरत्वं दण्डिप्रकाशवदनुमातुमशक्यत्वादित्यर्थः । मानसप्रत्यक्षवेद्यत्वेनापि विशेषणप्रकाशसंभवेन सिद्धसाधनत्वमित्याशंक्याह—**तस्य चेति** ॥

वृत्तिविरोधात् संवित्कर्मतामन्तरेण चापरोक्षत्वस्य संविदधीनप्रकाशताविरोधात् संवेदनवत स्वसंवेदनतासिद्धेः । विस्तृतमेतदन्यत्र । "नेह नाना" इति च प्रतिपन्नोपाधौ श्रौतनि-

---

व्यक्तिव्याप्यत्वमापद्येत । तच्च विरुद्धम् । न हि असिधारयैवासिधारा छिद्यते परसमवेतक्रियाफलशालि हि कर्मेति च कर्मविदः । कर्तृत्वकर्मत्वाभ्यां युगपद्गुणप्रधान-भावश्च प्रसज्येत । तस्मान्न मानसवेदनीयत्वेनात्मनः प्रकाश इत्यर्थः । नापि विषयसंविद्बलादात्मनः प्रकाश इत्याह—**संवित्कर्मतामन्तरेणेति** ॥ आत्मा न संविदधीनप्रकाशः, संवित्कर्मणामन्तरेणापरोक्षत्वात, यदेवं तदेवम्, यथा संवेदनमिति । विषयसंविदधीनप्रकाशत्वे च विषयवदनात्मत्वप्रसङ्गात् । नाप्यनुमेयतया, परोक्षत्वात् न भ्रान्त्या बाधाभावात् । न चान्यद्गत्यन्तरमस्ति । तस्मादात्मा परिशेषात स्वयंप्रकाश इति न तत्रानैकान्तः । ननु तथाप्यविद्यानिवृत्तिः प्रसिद्धा दृश्य सत्या चेत्यनैकान्तिकत्व-मित्याशङ्क्याह—**नेह नानेति चेति** ॥ अविद्याव्यावृत्तिर्हि पञ्चमप्रकारा आत्माति-रिक्तेत्येकः पक्षः । आत्मैवेत्यपरः । तत्र प्रथमपक्षे तावन्नानैकान्तिकत्वं तस्यापि बाध्यत्वे-नालीकत्वात् । बाधश्चाविद्याव्यावृत्तेः व्यवहारावस्थायां परमार्थत आत्मातिरेकेणावस्तुत्व-प्रदर्शनम्, न त्वज्ञानव्यावृत्तिः, परोक्षबाधस्यैवंप्रकारत्वात् । निवृत्तेश्च प्रध्वंसस्वरूपत्वेनो-

एकमेव ज्ञानं प्रत्यात्मनः कर्मकर्तृत्वयोर्विरोधप्रसङ्गान्मनसा तद्वेदनं न संभवतीति भावः । आत्मसंवेदनज्ञानेनात्मनः स्फुरणेऽपि परसमवेतक्रियाफलशालित्वाभावात् कर्मत्वाभावे कर्म-कर्तृत्वविरोधाभावात् घटादेरेव तल्लक्षणयोगेन कर्मत्वात् संविदः स्वयंप्रकाशतायाः स्फुरणात त्रिपुटीप्रत्यक्षवादे न काचन दोषकला इति **प्रभाकर**मतमाशंक्याह—**संवित्कर्मतामिति** ॥ संविदधीनप्रकाशता संविदधीनापरोक्षव्यवहारयोग्यतेति यावत् । अन्यथा संविदधीनस्य प्रकाशान्तरस्यानभ्युपगमेन सिद्धसाधनतापातात्तत्तच संविद्व्यतिरिक्तत्वे सति इति विशेषण-मवगन्तव्यम् ।

अन्यथा दृष्टान्ते संविदधीनापरोक्षव्यवहरयोग्यत्वस्यासंभवेन साध्यविकलत्वप्रसङ्गा-दित्यर्थः । आत्मा संविद्व्यतिरिक्तत्वे सति संविदधीनव्यहवहारविषयो न भवति । संवित्क-र्मतामन्तरेणापरोक्षत्वात् संवेदनवदिति प्रयोगोऽवगन्तव्यः । घटादिषु व्यभिचारनिवारणार्थं संवित्कर्मतामन्तरेणेति विशेषणम् । अतीन्द्रियेषु व्यभिचारनिवारणार्थं अपरोक्षत्वादिति विशेषणम् । स्वप्रकाश इति प्रतिज्ञायं तु न कश्चिद्दोष इत्यवगन्तव्यम् । **अन्यत्रेति** । **प्रमाणमालायां न्यायमकरन्दे च** ।

चेदात्मनो बाधादविद्यानिवृत्तेरप्यलीकत्वादात्मातिरेके । तादात्म्ये तूक्तयुक्तेः तथा-भावात् न तयाप्यनैकान्तिकत्वम् ॥ स्यान्मतम्—व्यतिरेकासिद्ध्या सन्दिग्धव्यतिरे-कोऽयमनैकन्तिकताभेदः । न । तथा हि—न तावत् नरविषाणे व्यतिरेकनिश्चयः तस्य दृश्यत्वे व्यतिरेकाभावात्; अदृश्यत्वे तदनिश्चयात् । नात्मन्यप्यत एव ।

---

पादानाज्ञानाभावाच्चेत्यादि द्रष्टव्यम् । नन्वविद्यानिवृतेः अलीकत्वेऽविद्यासद्भाव एव वास्तवः आपद्येत, आत्माकाशादीनामिव । न, मिथ्याभूतस्याज्ञानस्य मिथ्यानाशेन विनाशोपपत्तेः स्वप्नदृष्टनरकरितुरगादिवदिति । पञ्चमप्रकाराविद्यानिवृत्तिपक्षे नानैकान्ति-कतावसरः । सिद्धान्तोऽपि चायमेव न्यायबृंहितत्वात् । पक्षान्तरं तु बुद्धिविकासार्थमाह —तादात्म्ये त्विति ॥ अविद्याव्यावृत्तेरात्मतावन्मात्रत्वे स्वयंप्रकाशत्वे प्रागुक्तयुक्ते-रविद्याव्यावृत्तेः दृश्यत्वमेव नास्तीति नाविद्याव्यावृत्त्याऽनैकान्त इत्यर्थः । इदानी-मनैकान्तिकविशेषमाशङ्कते—स्यान्मतमित्यादिना ॥ तदुक्तं—

याववचाव्यतिरेकित्वं शतांशेनापि शङ्क्यते ।

विपक्षस्य कुतस्तावद्धेतोर्गमनिकाबलम् ॥ इति

व्यतिरेकासिद्ध्या व्यावृत्त्यनिश्चयेनेत्यर्थः । प्रपञ्चस्य मिथ्यात्वे साध्यमाने तुच्छं नरविषाणं सत्यश्चात्मा विपक्षो भवति बाध्यतालक्षणस्य मिथ्यात्वस्योभयत्रापि सिद्धत्वात् । तत्र नरविषाणस्य दृश्यत्वे ततो व्यावृत्तिरवगन्तुं न शक्यते । तस्यादृश्यत्वेऽपि ततो व्यावृत्तिर्निश्चेतुं न शक्यते व्यावृत्तिज्ञानस्य धर्मिप्रतियोगिज्ञानापेक्षत्वादित्याह—तथा हीत्यादिना ॥ "नात्मन्यप्यत एव" इत्यस्यायमर्थः—आत्मा दृश्यश्चेद्भवति तदा

ननु तथापि दृश्यत्वहेतुरविद्यानिवृत्तावनैकान्तिक इत्याशङ्क्यात्मव्यतिरिक्तत्वे तस्यापि नेह नानास्ति किं चनेति श्रुत्या बाध्यत्वेन मिथ्यात्वसंभवान्नानैकान्तिकतेति परिहरति—नेह नानेति चेति ॥ अविद्यानिवृत्तेरात्मस्वरूपत्वे तस्य स्वयंप्रकाशत्वान्ना-नैकान्तिकतेत्याह—तादात्म्येति ॥ उक्तयुक्तेः स्वयंप्रकाशत्वादित्यर्थः । सन्दिग्धानै-कान्तिकत्वमाशङ्कते—स्यान्मतमिति ॥ व्यतिरेकनिश्चयः किं निरुपाख्ये किं-वात्मनीति विकल्प्याद्यं दूषयति—तथा हीति ॥ मिथ्यात्वाभावो व्यतिरेकः । स च स्वाश्रये धर्मिणि दृष्टे गृह्यते तथा च दृश्यत्वस्य तत्र सद्भावान्न तदभावो ज्ञातुं शक्यत इत्यर्थः ।

द्वितीयं दूषयति—नात्मनीति ॥ आत्मन्यदृश्ये तत्र व्यतिरेकग्रहणायोगात् ।

**अधिकश्च** दृश्यत्वेऽपसिद्धान्तः । **न** चोपाधिविधूननेन व्यतिरेकावगतिः, अदृश्योपाधिविधूननस्याशक्यत्वात् । न च विपक्षे बाधकाद्व्यतिरेकाधिगतिः । स हि भवन्नुपाधिकोटौ तदायत्तव्यभिचारकोटौ वा भवेत् । अदृश्योपाधावविरोधान्नाद्यिमः कल्पः । नाप्याहत्यव्यभिचारे विरोधानुपलम्भादन्तिमः । संबन्धाभावः सत्यस्य दृश्यतायां बाधक

---

स्फुटमनैकान्तिकत्वम् । अदृश्यश्चेत् तदा सन्दिग्धा व्यावृत्तिः तस्मिन्नदृश्ये ततो व्यावृत्तेः निश्चेतुमशक्यत्वादिति । प्रागुक्तहेतोरेव नात्मन्यपि दृश्यत्वहेतोर्व्यावृत्तिनिश्चय इति । नन्वतिदेशोऽधिकं कंचिद्दोषमभिप्रेत्य भवति कोऽत्राधिको दोष इत्याशङ्क्याह—**अधिकश्चेति** ॥ ननु सोपाधिकस्य हेतोर्विपक्षगमनमाशङ्क्येत । न चात्रोपाधिरस्ति इति प्रागेवावेदितम् । अतो व्यतिरेकनिश्चय इत्याशङ्क्याह—**न चोपाधिविधूननेति** ॥ ननु यावत् बाधकस्तर्को नोपनिपतेत् तावदेव शङ्काकलङ्कावकाशः । सन्निपतिते तु तस्मिन्नाशङ्काकलङ्कोऽपि । तदाह **स्मोदयनोऽपि** "व्याघातावधिराशङ्का" इति इत्याशङ्क्याह—**न च विपक्ष इति** ॥ तत्र विकल्पमुखेन हेतुमाह—**स हीति** ॥ हि यस्मात् स तर्को बाधको भवन् क्व भवति ? किमुपाधिपक्षे किंवोपाध्यायत्तो योयं दृश्यत्वहेतोः साध्यव्यभिचारस्तत्कोटौ वा; नोभयथापि संभवतीत्यर्थः । नाप्यन्तिमः आहत्य झटिति दृश्यत्वहेतोः साध्यव्यभिचारे तर्कविरोधानुपलम्भादित्यन्वयः ॥ **संबन्धाभावः** इत्यादिःस्पष्टार्थः । स्वयमेव

---

दृश्यत्वे च साधनसद्भावादेव साधनाभावस्य वक्तुमशक्यत्वादित्यर्थः । दृश्यत्वे दूषणान्तरमाह—**अधिकश्चेति** ॥ प्रागुक्तप्रकारेणोपाधिनिराकरणादेव व्यतिरेकनिश्चयो भविष्यतीत्यत आह—**न चेति** ॥ दृश्यस्य दोषगम्यत्वादेर्निराकरणेऽपि अदृश्योपाधिनिराकरणस्याशक्यत्वादित्यर्थः । सत्यत्वे दृश्यत्वानुपपत्तिलक्षणबाधकतर्काद्व्यतिरेकनिश्चयो भविष्यतीत्यत आह—**न च विपक्ष इति** ॥ तत्र हेतुमाह—**स हीति** ॥ यदा निरुपाधिकः संबन्धो व्याप्तिस्तदोपाधिसत्त्वमेव व्याप्तिभङ्गतया दूषणम् । अव्यभिचरितः संबन्धो व्याप्तिरिति पक्षे "व्यभिचारोन्नयनं कुर्वन्नुपाधिर्याति दोषतां" इति व्यभिचारोन्नायकत्वेन उपाधिदूषणं भवेदिति व्यवस्था । तर्कः किमुपाधिनिरासेन व्यभिचारनिश्चायकः किं वोपाध्यायत्तव्यभिचारनिरासेनेति विकल्पार्थः ।

आद्यं दूषयति—**अदृश्योपाधाविति** ॥ अदृश्योपाधिनिराकरणस्याशक्यतया न तत्र तर्कस्योपयोगः इत्यर्थः ।

इति चेत्, नैवमपि, स्वदृश्यतोपपत्तेः। तथा सति श्रुतिविरोध इति चेन्न, स्वसंवेदन-संवेदनाश्रयणात्। न हि स्ववृत्तिव्यतिरेकी स्वसंवेदनार्थः। स्वयं च तत्संवेदनं चेत्यङ्गीकारे वेदनान्तरवेद्यताया अप्यविरोधात्। स्वस्य संवेदनं स्वसंवेदनमित्याश्रयणे तच्चेत्स्वयं स्वात्मनि वृत्त्यापत्तिः। अन्यच्चेदपराद्धान्तः। स्वसंवेदनं संवेदनमिति च सामानाधिकरण्यानुपपत्तिः। स्वमात्मीयं संवेदनं यस्य इत्यभ्युपगमे घटस्यापि स्वसंवेदन-

स्वस्य संवेदनमिति स्ववृत्तिरेव स्वसंवेदनशब्दार्थः त्वयाभ्युपगन्तव्यः; तद्वज्जडस्य सत्यस्य यद्यपि स्वातिरेकादर्शनेन संयोगादिलक्षणः संबन्धः न संभवति, तथापि स्वसंवेद्यत्वं भविष्यतीत्याह—**न स्वसंवेदनमिति**॥ स्वयमेव स्वस्य संवेदनमिति स्वसंवेदनशब्दार्थ-त्वेनाश्रीयते तदा तस्यार्थ एव न संजाघटीति। कथमिति चेदुच्यते। किं स्वयं च तत् संवेदनं चेति स्वसंवेदनं आहोस्वित् स्वस्य संवेदनं स्वसंवेदनं किं वा स्वात्मीयं स्वसंबन्धि संवेदनं यस्य तत् स्वसंवेदनमिति व्युत्पत्तिराश्रीयते इति? न तावदाद्यो निरवद्य इत्याह—**स्वयं चेति**॥ स्वयं भवतु संवेदनं च भवतु किमेतावता वेदनान्तरवेद्यता-यामायातम् इत्यर्थः। द्वितीयव्युत्पत्त्याश्रयणेऽपि यत् स्वविषयं संवेदनं तत्किं स्वयमेव उतान्यदिति विकल्प्य आद्यं दूषयति—**स्वस्य संवेदनमित्यादिना**॥ तृतीयो-ऽपि न चातुरीं दत्त इत्याह—**स्वमात्मीयमिति**॥ स्वाभिप्रेतां व्युत्पत्तिं निगमयति—

---

द्वितीयं दूषणयति—**नाप्यन्तिम इत्यन्वयेनाह—नापीति**।

**आहत्यव्यभिचारे** साक्षाद्व्यभिचारे। यदि धूमो वह्निं व्यभिचरेदकारणः सन्निरयः स्यादितिवद्दृश्यत्वस्य मिथ्यात्वव्यभिचारे साधकतर्कानुपलम्भादित्यर्थः। बाधकमाशङ्कते—**संबन्धेति**॥ संबन्धाभावेऽपि दृश्यतोपपत्तेर्नैवमिति परिहरति—**नैवमिति**॥ स्वेन स्वस्य दृश्यत्वे कर्मकर्तृविरोधः स्यादिति शङ्कते—**तथा सतीति**॥ तदेतत्प्रतिबन्द्या दूषयति—**स्वसंवेदनसंवेदनेति**॥ न तावता सिद्धान्तेपि विरोधः स्यादित्यत आह—**नहीति**॥ स्वसंवेदनशब्दस्य कर्मधारयेण षष्ठीसमासेन बहु-व्रीहिणा वान्वयसंभवात् कथं स्ववृत्तिव्याप्यत्वमित्याशङ्क्य दूषयति—**स्वयं चेति**॥ वेदनान्तरवेद्यताया अविरोधान्न स्वप्रकाशता सिध्येदित्यर्थः। षष्ठीसमासे दोषमाह—**स्वस्येति**॥ स्वस्य संवेदनं स्वयमेव उतान्यदिति विकल्प्याद्ये दोषमाह—**स्वस्येति**॥ **तच्चेदिति**। द्वितीयं दूषयति—**अन्यच्चेदिति**। अन्यत्वे दोषान्तरमाह—**स्वसंवेदन-मिति**। स्वसंवेदनशब्देन स्वव्यतिरिक्तसंवेदनस्याभिधानात् स्वसंवेदनशब्देन स्ववाचकेन

तापत्तौ संविद्विशेषणवैयर्थ्यम् । तस्मात् स्वस्य स्वयमेव संवेदनमिति स्वसंवेदनार्थः । तथा च सत्यं स्यात् स्वसंवेदनत्वात्, दृश्यं च— इति न विरोधः कश्चित् । तेन विपक्षे बाधकादपि न व्यतिरेकसिद्धिरिति ; नैतत् ; आत्मनि व्यतिरेकोपपत्तेः । तस्य तु

तस्मादिति ॥ अस्तु तथा संवेदने; जडजाते तु किमायातमित्यत आह—तथा चेति ॥ तस्मात्सन्दिग्धव्यतिरेकोऽयमनैकान्तिकभेद इति पूर्वपक्षं दूषयति— नैतदित्यादिना ॥ यत्तावदभिहितं असति नरविषाणे व्यतिरेकनिश्चयो न संभवति इति, तदुपेक्षितं, तस्य विपक्षत्वाभावात् विकल्पस्यापि स्वसिद्धान्तेऽविद्याविजृम्भितत्वाभ्युपगमादिति गमयितव्यम् । यच्चैवं गदितम् 'नात्मन्यप्यत एव' इति तदसत्, आत्मनि दृश्यत्वहेतोः व्यावृत्तिनिश्चय-संभवादित्यर्थः । नन्वात्मनः स्वयंप्रकाशत्वात् तस्मिन्नदृश्यमाने कथं ततो व्यावृत्तिः निश्चेतुं शक्यत इत्याशङ्क्याह— तस्य त्विति ॥ यद्यप्यात्मनः परमार्थरूपेण स्वप्रकाशत्वं तथापि व्यतिरेकावच्छिन्नस्य दृश्यत्वाभावविशिष्टस्य स्यादेव दृश्यता "अदृश्यो न हि दृश्यते" इत्यादिश्रुतेः । अतो दृश्यत्वहेतोः व्यावृत्तिनिश्चयः सुकर एव । न चैवं तत्रैव स्फुटमनैकान्तिकत्वं; विशिष्टरूपस्य मिथ्यात्वाभ्युपगमात्सत्यस्य च स्वरूपस्य स्वयंप्रकाशत्वाभ्युपगमात् । ननु स्वरूपे अदृश्ये कथं तस्य दृश्यत्वाभाववैशिष्ट्यं दृश्यं स्यात् । उच्यते । स्वयंप्रकाशत्वेन प्रकाशमाने सत्यात्मनि वाक्याददृश्यत्वविषयाकारा बुद्धिवृत्तिरुत्पद्यते तस्यामभिव्यक्तो दृगात्मा स्वाध्यस्तं दृश्यत्वाभाववैशिष्ट्यं साधयति । न च वाच्यं दृश्यत्वाभाववैशिष्ट्यस्य मिथ्यात्वे दृश्यत्वमेव वस्तवमिति । स्वप्ने भावतद्विपर्यययोरध्यस्ततादर्शना-

सामानाधिकरण्यं न स्यात् । स्वसंवेदनसंवेदनयोर्भिन्नत्वादित्यर्थः । बहुव्रीहिपक्षे दोषमाह— स्वमात्मीयमिति ॥ तादृशस्वयंप्रकाशत्वस्य घटादिष्वपि भावात् ज्ञानमेव स्वसंवेदनमिति ज्ञानस्य विशेषो न भवेदित्यर्थः । अतः स्ववृत्तिव्याप्यत्वमेव पर्यवस्यतीत्युपसंहरति— तस्मादिति ॥ एवं च सति सत्यस्यापि जडस्य स्वदृश्यत्वेन विरोध इति निगमयति— तथा चेति ॥ महाप्रमेयमुपसंहरति— तेनेति ॥ सिद्धान्तमाह— नैतदिति ॥ तस्य स्वप्रकाशत्वेन दृश्यत्वाभावात् कथं व्यतिरेकग्रह इत्यत आह— तस्य त्विति । स्वरूपेणादृश्यत्वेऽपि चन्द्रसंपृक्तराहुवन्मिथ्यात्वस्य दृश्यत्वाभावविशिष्टस्य प्रमाणदृश्यत्वे व्यतिरेकग्रहोपपत्तेः ।

न च व्यतिरेकग्राहकप्रमाणदृश्यत्वे साधनविरहस्याभावात् कथं व्यतिरेकग्रहोपपत्तिरिति वाच्यम् —तेनापि सर्वप्रमाणदृश्यत्वाभावग्राहिणा स्वदृश्यत्वाभावग्रहस्याग्रहणेन व्यतिरेकसिद्धेः ।

स्वयंप्रकाशत्वेऽपि व्यतिरेकावच्छिन्नस्य स्यादेव दृश्यता । तस्य हि निरुपाधिक-रूपमपराधीनप्रकाशम्; सोपाधिकम् तु पराधीनप्रकाशम् । तदेतदभिप्रेत्योक्तम् "सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते । प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते ॥" इत्यादि । यदि पुनरित्थं स्वयूथ्यो नाङ्गीकुर्यात्, कथमसौ दृश्यत्वमेवोपपादयेत्? दृगवच्छिन्नस्य दृश्यत्वात्; अवच्छेदकदृश्यतानुपपत्तौ अवच्छिन्नस्यापि तदनुपपत्तेः । उपाधिनिरासादपि व्यतिरेकोपपत्तिः । उपाधिस्तु दृश्यो दृश्यानुपलम्भनिरसनीयः । तदितरः

---

दिति सर्वमनाकुलम् । उक्तमेव विभागं स्फुटीकरोति—तस्य हीति ॥ सोपाधिरूपं पराधीनप्रकाशमित्येतदेवाभिप्रेत्योक्तं मण्डनमिश्रैरपि

"सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यवस्थिते ।
प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते ॥"

इति । वेदान्तैकदेशिनं हठादभ्युपगमयति—यदि पुनरिति ॥ नागृहीत-विशेषणा विशेष्ये बुद्धिरिति न्यायेन विशेषणभूतदृगनवगमे विशेष्यदृश्यदृष्टिरेव न संभवतीत्यर्थः । स्वयंप्रकाशत्वेन स्वरूपस्फुरणेऽपि विशेषणरूपास्फुरणात् वैपरीत्यस्यापि संभवादिति । यच्चेदं गदितं न चोपाधिविधूननेन व्यतिरेकावगतिरिति तदपि मन्दमित्याह—उपाधिनिरासादपीति ॥ ननूपाधिनिरासोऽशक्यकरण इत्याशङ्क्याह—उपाधि-स्त्विति ॥ दर्शनार्हश्चेदुपाधिः तर्हि योग्यानुपलम्भनिरसनीय इत्यर्थः । तदितरस्तर्क-

---

न च स्वदृश्यत्वाभावग्रहणे कुतस्त्वदृश्यत्वोपपत्तिः? शब्दशब्दवद्वेद्यत्वानु-मानबद्धाऽविरोधात् । प्रमाणग्राह्यत्वे कथं स्वप्रकाशवाचोयुक्तिरित्यत आह—तस्येति ॥ उक्ते वृद्धसंमतिमाह—तदेतदिति ॥ एवं विशिष्टस्य दृश्यत्वे व्यतिरेकग्रहोपपत्तिरुक्ता । यस्तु स्वयंप्रकाशत्वश्रद्धाजडतया विशिष्टस्यापि दृश्यत्वं नाङ्गीकुरुते तं प्रत्याह—यदि पुनरिति ॥ दृश्यत्वं प्रपञ्चस्य दृश्यत्वमिति यावत् । का अनुपपत्तिरित्यत आह—दृगवच्छिन्नस्येति ॥ भवत्वेवं दृश्यत्वम् । तथापि प्रकृते किमायातमित्यत आह—अवच्छेदकेति ॥ दृश्यत्वहेतुना मिथ्यात्वं साधयता पर्वते धूमग्रहणवत् प्रपञ्चे दृश्यत्वग्रहो वाच्यः । दृग्विषयत्वं दृश्यत्वम् । तथा च दृगवच्छिन्नत्वस्य प्रपञ्च-निष्ठतया ग्रहणे विशेषणभूतदृग्ग्रहणमवश्यंभावि, नागृहीतविशेषणा विशिष्टे धीरिति न्यायादित्यर्थः । उपाधिनिरासप्रकारमेव दर्शयति—उपाधिस्त्विति ॥ तर्केण निरास-

**तर्कनिरसनीयः । स खलूपाधिकोटौ तदायत्तव्यभिचारकोटौ वाहत्य प्रवर्तमानो विपक्ष-विरोधी भवन्न व्यभिचारसिद्धेरङ्गम् । अदृश्योपाधौ विरोधः क इति चेत् , समः पर्यनुयोगः दहनानुमानेऽपि । ननु नोपलभ्यमानस्य नियमेनानुपलभ्यो भवत्युपाधिः ।**

---

**निराकरणीय इति** । अयमाशयः । शङ्क्यमान उपाधिः किं दोषगम्यत्वेनासहवृत्तिः किं वा सहवृत्तिः ? प्रथमे साध्याव्याप्तिः , साध्यतुल्यवृत्तिनास्य दोषागम्यत्वेनासहवृत्तित्वात् । द्वितीयेऽपि किं तेन तुल्यवृत्तिः उताधिकवृत्तिः किं वा न्यूनवृत्तिरिति वाच्यम् । प्रथम-द्वितीययोः दोषगम्यत्ववत् साधनाव्याप्तिः इतरत्र साध्याव्याप्तिः दोषगम्यत्वस्येव विनापि साध्येन तस्य भावात्, दोषगम्यत्वं हि दोषविषयज्ञानगम्यत्वं तच्चास्तीदमंशेऽपि । न च तस्य मिथ्यात्वमिति । दोषगम्यत्वस्य मिथ्यात्वाव्यापकत्वे सुतरां तन्न्यूनवृत्तेः तद-व्याप्तिरिति । यच्चावोचः —न च विपक्षे बाधकादपि व्यतिरेकावगतिरिति, तत्राह— **स खलूपाधिकोटाविति** ॥ तर्कः खलु उपाधिस्कन्धे तदधीनव्यभिचारस्कन्धे वा झटिति प्रवर्तमानो जडस्य सत्यत्वविरोधी दृश्यत्वहेतोः मिथ्यात्वाव्यभिचारसिद्धेः हेतुर्भवती-त्यर्थः । आहत्य चाप्रवर्तमान इति पाठे साक्षादप्रवर्तमानोऽपीत्यर्थः । अदृश्योपाधाव-विरोधान्नाग्रिम इति यदवादि तदनुवदति—**अदृश्योपाधाविति** ॥ परिहरति—**सम-इति** ॥ अदृश्योपाधौ तर्कस्य विरोधाभावाच्चेदप्रवृत्तिः तर्हि वह्न्यभावे धूमवत्त्वमेव न स्यात् उदकदेशवत् कारणाभावात् इत्यस्यापि तर्कस्य प्रसराभावान्न दहनानुमानमपि सदनुमानं स्यादित्यर्थः । दहनानुमाने नोपाधिशङ्का प्रसरीसर्ति इत्याह—**ननु नोपलभ्यमान-स्येति** ॥ उपलभ्यमानस्य सतोऽर्थस्य कदाचिदपि नोपलभ्यते यस्स उपाधिरेव न भवति । एवं च सति यदि धूमदहनयोः कश्चिदुपाधिर्विद्यते तर्हि कदाचिदुपलभ्येत शिष्याचार्यसन्नि-धाविवाध्ययनं ; न चोपलभामहे; तस्मान्नास्तीति निश्चीयत इत्यर्थः । तर्ह्येतावतापि दृश्यत्व-

प्रकारमेव दर्शयति—**स खल्विति** ॥ **विपक्षविरोधीति** ॥ सपक्षविपक्षवृत्तित्वविरोधी भवन्न व्यभिचारसिद्धेरङ्गं भवेदित्यर्थः ।

ननु भवतु तर्केण दृश्योपाधिनिरासः अदृश्योपाधिनिरासः कथमिति शङ्कते—**अदृश्योपाधाविति** । प्रमाणानुपलभ्यः कश्चिदुपाधिर्भविष्यतीत्याशङ्कायां धूमाद्यनुमानेऽपि सुप्रसरतया सर्वानुमानप्रतिक्षेपान्मैवमिति परिहरति—**सम इति** ॥ प्रसिद्धानुमानवैषम्य-माशङ्क्य तुल्यमत्रापीति परिहरति —**नन्विति** ॥ प्रसिद्धानुमानेषूपाधिनिरासप्रकार-

तथा च शिष्याचार्ययोरिव प्रत्यासत्तावध्ययनम् । धूमदहनयोरपि कदाचिदुपलभ्येतेति चेत्, समः समाधिः । सर्वदानुपलभ्यमानोऽपि शङ्क्यत इति चेत्, पर्यनुयोगसाम्यम् । स यदि स्वरूपमात्रानुबन्धी, तदाप्यव्यभिचारसिद्धिः, तत्कृतस्यापि संबन्धस्य यावत्साधनभावित्वात् । अथागन्तुकः, तत्कारणान्यपि प्रतीयेरन् । उपाधिस्तत्कारणानि च सर्वाण्यत्यन्तादृश्यानीति गुर्वीयं कल्पना स्यादिति चेत्, तुल्यमुत्तरमन्यत्राभिनिवेशात् । आहत्यापि व्यभिचारे बाधकं तर्कमवोचाम ॥

मिथ्यात्वयोः यदि कश्चिदुपाधिर्विद्येत उपलभ्येत; नचोपलभामहे; तस्मान्नास्तितां प्रतिपद्येमहीत्याह—**समः समाधिरिति** ॥ **सर्वदा**- इत्यादि स्पष्टम् । ननु दहनानुमाने शङ्क्यमान उपाधिः किं स्वाभाविकः उत आगन्तुकः शङ्क्यते? प्रथमोऽकिञ्चित्कर इत्याह—**स यदीति** ॥ स्वाभाविकोपाधिकृतस्यापि वह्निधूमसंबन्धस्य यावन्निमित्तभावित्वात् वह्निधूमयोरव्यभिचारःसिध्यतीत्यर्थः । द्वितीयमनूद्य दूषयति—**अथेत्यादिना** ॥ तत्कारणान्यदृश्यानीत्याशङ्क्याह—**उपाधिस्तत्कारणानि चेति** ॥ तर्हि दृश्यत्वमिथ्यात्वयोरपि सर्वदानुपलम्भेऽपि यः शङ्क्यते, स किं स्वाभाविकः उत आगन्तुक इत्यादि विकल्पदूषणं समानम्; तव पुनरभिनिवेश एवाधिकः इत्याह—**तुल्यमिति** ॥ तस्माददृश्योपाधावविरोधः । नाग्रिमः कल्पः इत्यसंबद्धमेवावोचः । यच्चावोचः आहत्य व्यभिचारे विरोधानुपलम्भात् नाग्रिम इति तत्राह—**आहत्यापीति** ॥ जडस्य सत्यत्वे संबन्धाभावाद् दृश्यत्वानुपपत्तिरिति बाधकं तर्कमुक्तवन्तो वयमित्यर्थः ।

- - - - - -

माशङ्कते—**धूमदहनयोरिति** । **स्वरूपमात्रानुबन्धी** साध्यसाधनस्वरूपमात्रानुबन्धी । साध्यसाधनप्रयोजकप्रयोज्य इति यावत् । तत्रोपाधेः साध्यस्वरूपानुबन्धित्वे तत्कृतस्य साध्यसंबन्धस्य यावत्साधनभावित्वेन साधनस्यापि साध्येनाव्यभिचारसिद्धिः । साधनरूपानुबन्धित्वे उपाधेस्साध्येन व्याप्ततया साधनव्यापकत्वादेव तत्कृतस्यापि स्वरूपस्य यावत्साधनभावित्वं, व्यापकव्यापकस्य व्याप्यं प्रति व्यापकत्वादित्यर्थः । महप्रयोजकतयाऽऽगन्तुकत्वे दोषमाह—**अथेति** ॥ कारणानामदृश्यत्वमाशङ्क्य गौरवेण परिहरति—**उपाधिरिति** ॥ समानमेतद्दृश्यत्वानुमानेऽपीति परिहरति—**तुल्यमिति** ॥ एवं तर्केणोपाधिनिरासोऽभिहितः बाधकतर्कबलात् व्यभिचारनिरासस्तु पूर्वमेवोक्तः इत्याह—**आहत्येति** ॥ सत्यस्य जडसंबन्धाभावो बाधकस्तर्कः । जडस्य सदृश्यतामनूद्य दूषयति—

यत्तु संबन्धाभावात्परदृश्यताभावेऽपि स्वदृश्यतोपपत्तिरिति तन्न; स्वात्मनि वृत्तिविरोधात्। कथं तर्हि स्वसंवेदनमिति चेत्, स्वप्रतिबद्धव्यवहारे नान्यसंविदपेक्षेति। न तु स्वात्मनि वृत्तिः स्वसंवेदनार्थः। स्वयमेव स्वस्मिन् संवेदनमित्यपि हि स्वसंवेदनव्युपादनेन वेदनान्तरव्यावृत्तिर्विवक्षिता। "स्वयं दासास्तपस्विनः" इत्युक्त इव दासान्तरव्यावृत्तिः। न च कुम्भादयो जडस्वभावाः संविदमन्यामपेक्षन्त इति संविदोऽपि तथा भावप्रसङ्गः। सन्तमसविदारणद्वारेण चक्षुराप्यायनेन वा स्वप्रकाशने तेषामेव प्रदीपाद्यपेक्षायामपि न यथा प्रदीपादेः तथाभावः तथाऽपरेषां परसंविदपेक्षत्वेऽपि स्वव्यवहारे

---

यत्तु-इत्यादिः स्पष्टार्थः। अथापि भवतः श्रद्धामनुरुध्यमानाः स्वयमेव स्वस्मिन् संवेदनमिति व्युत्पादयेम तथापि स्ववृत्तिं नाभ्युपगच्छेम इत्याह— **स्वयमेव स्वस्मिन्निति** ॥ ननु संवित् स्वातिरिक्तवेद्या, वस्तुत्वात्, घटादिवत्, अतो न वेदनान्तरव्यावृत्तिः शक्यकरणेत्याशङ्क्याह—**न च कुम्भादय इति** ॥ असंविद्रूपत्वमुपाधिरिति वाच्यम्। किं च संविदोऽपि वेद्यत्वेऽसंवित्त्वप्रसङ्गः। घटादिवत् वास्तववेद्यत्वसाधने साध्यविकलो दृष्टान्तः अवास्तववेद्यत्वसाधने साधारणवेद्यत्वसाधने वा सिद्धसाधनम्; वस्तुत्वं चैकं घटादिषु संवेदने च नानुगतमस्तीति साधनविकलता वाच्या। अभिहितं चैतदन्यत्रास्माभिरिति नेह वितन्यते संग्रहाधिकारात्। नन्वर्धजरतीयमिदमनुपपन्नम्। यदुत कस्यचित् स्वावभासने कस्यचित्स्वातिरेक्यपेक्षा कस्यचिन्नेत्याशङ्क्याह—**सन्तमसं इत्यादिना** ॥ तेषामेव घटादीनाम्। **न प्रदीपादेस्तथा भाव इति**। न स्वप्रकाशने प्रदीपान्तरसापेक्षत्वमित्यर्थः। अपरेषां घटादीनां, स्वातिरिक्तसंविदपेक्षत्वेऽपि स्वप्रतिबद्धव्यवहारे न संविदस्तथाभाव इति न स्वातिरिक्तसंविदपेक्षत्वमित्यर्थः। संवेदनं न स्वावान्तरजातीय-

यन्त्विति ॥ स्वसंवेदनप्रतिबन्दित्वमुत्थाप्य निराकरोति—**कथं तर्हीति** ॥

स्वयमेव स्वस्मिन् संवेदनमिति स्वसंवेदनशब्दस्य व्युत्पत्तेः कथमन्यानपेक्षत्वमात्रमित्याशङ्क्य स्वशब्दस्यान्यनिवृत्तिमात्रवचनत्वान्मैवमिति परिहरति—**स्वयमेवेति**। तत्र दृष्टान्तमाह—**स्वयं दासा इति**। स्वस्य व्यवहारे स्वातिरेकिसंविदपेक्षत्वस्य जडे दृष्टत्वात् ज्ञानेऽपि तथाभावः स्यादित्याशङ्क्याह—**न चेति**। किमेतदनुमानमुत दृष्टान्तदर्शनेन संभावनामात्रं? नाद्यः—यद्व्यवहार्यं तदन्येनेत्यस्मिन्नेव ज्ञाने व्याप्तिग्राहकज्ञानेनानैकान्तिकत्वात् तस्यापि परवेद्यत्वेऽनवस्थापाताद्व्याप्तिग्रहणासिद्धेः।

द्वितीयपक्षे दोषमाह—**सन्तमसेति**। घटादिना स्वातिरिक्तस्यालोकस्य संवेदनस्य

न संविदस्तथाभाव इति किमनुपपन्नम् ? प्रपञ्चितमेतदन्यत्र । तदेवं व्यतिरेकसिद्धेः न सन्दिग्धानैकान्तिकत्वम्; नापि धर्म्यादेः सत्यत्वे तेनैव दृश्यत्वमनैकान्तिकम् । असत्यत्वे वा न साधनाङ्गत्वमिति साम्प्रतम्; असत्यस्यापि प्रतिबिम्बादेः सत्यबिम्बादि-सिद्धावङ्गतोपलम्भात् । सत्यमेव विज्ञानं तत्र साधनाङ्गमिति चेत्, न, ज्ञेयभेदाद्यन-वच्छिन्नस्य ज्ञानमात्रस्य साधनाङ्गत्वेऽतिप्रसङ्गात्; तदवच्छिन्नस्य सिद्ध्यङ्गतायां तस्यापि तदङ्गत्वात् । धूमाभासस्यासाधनाङ्गत्वं न असत्यत्वात्; अपि तु अव्याप्य-

**प्रकाश्यम्, प्रकाशत्वात्, य एवं स एवं यथा प्रदीपः इति प्रयोगः ।** यस्मादुक्तन्यायेन स्ववृत्तिः स्वसंवेदनार्थो न भवतीति ततस्तद्दृष्टान्तावष्टम्भेन जडस्य सत्यत्वेऽपि स्वदृश्यत्वं वक्तुमशक्यम् । ततो जडस्य सत्यत्वे दृश्यत्वानुपपत्तेः बाधकतर्कात् व्यावृत्तिनिश्चयः सिद्ध इत्युपसंहरति—**तदेवमिति** ॥ ननु धर्म्यादिस्सत्योऽसत्यो वा ? आद्ये तत्रैवानै-कान्तिकता, द्वितीये मिथ्याधूमवन्नानुमानाङ्गत्वमित्याशङ्क्याह—**नापि धर्म्यादेरिति** ॥ सत्यमेव प्रतिबिम्बज्ञानं बिम्बानुमानाङ्गमिति चेदभिधीयते, प्रतिबिम्बज्ञानं केवलं बिम्बानु-मानाङ्गं, किं वा प्रतिबिम्बावच्छिन्नमिति । प्रथमं पराकरोति—**न ज्ञेयभेद इति** । प्रतिबिम्बलक्षणेन विषयविशेषेणाविशेषितस्य ज्ञानमात्रस्य चेद्बिम्बानुमानाङ्गत्वम्, ततो घटादिज्ञानानामपि बिम्बगमकत्वमापद्येत धूमानुमानेऽपि धूमज्ञानमात्रस्यैव दहनानुमानाङ्ग-त्वमापद्यत इत्यर्थः । द्वितीयं प्रत्याह—**तदवच्छिन्नस्येति** ॥ प्रतिबिम्बलक्षणेन विषय-विशेषेण विशेषितस्य ज्ञानस्य बिम्बसिध्यङ्गतायां सत्यां तस्यापि प्रतिबिम्बानुमानाङ्गत्वात्

---

चापेक्ष्यमाणत्वेपि आलोके यथा न तदुभयापेक्षा स्वभावभेदादेवं ज्ञाने न ज्ञानान्तरापेक्षा स्वभावभेदादित्यर्थः । विषयसंस्कारत्वमिन्द्रियसंस्कारत्वं चेति पक्षद्वयमभिप्रेत्य सन्तमसेति विशेषणद्वयम् । **अन्यत्रेति** । **प्रमाणमालायाम्** । प्रकृतमुपसंहरति—**तदेवमिति** ॥

ननु धर्मिहेतुदृष्टान्तानां सत्यत्वं मिथ्यात्वं वा, सत्यत्वे दृश्यत्वहेतुरनैकान्तिकः, मिथ्यात्वे च बाष्पधूमादिवन्न साध्यसाधकमित्याशंक्य परिहरति—**नापीति** । प्रतिबिम्बं न गमकं किन्तु ज्ञानं तच्च सत्यमेवेति शङ्कते—**सत्यमेवेति** । किं ज्ञानमात्रं गमकमुत प्रतिबिम्बज्ञानमिति विकल्प्य क्रमेण दूषयति—**नज्ञेयभेदेति** । अतिप्रस-ङ्गात् घटदिज्ञानेनापि बिम्बानुमानप्रसङ्गादिति यावत् । **तस्यापि तदङ्गत्वादिति** । विशिष्टस्य साध्यगमकत्वे विशेषणस्यापि साध्यगमकत्वमवश्यंभावीत्यर्थः ।

त्वात् ; बहुलोर्ध्वतादिवदाभासविवेकस्यापि व्याप्त्युपयोगात् । व्याप्तस्य तु असत्यस्यापि सत्यबिम्बादिसिद्धौ अङ्गतामवादिष्म । व्याप्तिरप्यसत्या कथमुपयोगिनीति चेत्, सत्यापि कथमिति समानः पर्यनुयोगः ; सत्यत्वादेवेति वदतो मिथ्यात्वादेवेत्युत्तरम् । न दृष्टान्तसिद्धिरिति चेत्, समानमेतत् । व्याप्तिश्च व्याप्यव्यापकनिष्ठा तयोरन्य-

असत्यमपि धर्म्यादि तद्वदनुमानाङ्गमिति भावः । नन्वसत्यस्याप्यनुमानाङ्गत्वे मिथ्याधूमस्य बाष्पादेः दहनानुमानाङ्गत्वमापद्येतेत्याशङ्कयाह—**धूमाभासस्येति** ॥ ननु धूमाभासस्याव्याप्तत्वं वा कुत इत्याशङ्कयाह—**बहुल इति** ॥ धूमाभासस्यासत्यत्वेऽव्याप्तत्वे च समाने न शक्यते विशेषतो वक्तुमव्याप्तत्वमेव प्रयोजकमिति व्याप्तस्यासत्यस्यापि गमकत्वादर्शनात् इत्याशङ्कयाह-**व्याप्तस्य त्विति** ॥ इदमिहाकूतम् - न सत्यत्वमसत्यत्वं वा गमकत्वागमकत्वयोः प्रयोजकम् ; किन्तु व्याप्तत्वमव्याप्तत्वं च । स्वरूपासतोऽपि कुम्भादेरव्याप्तस्यागमकत्वात् ; मिथ्याभूतस्य च व्याप्तस्य प्रतिबिम्बस्य बिम्बगमकत्वोपलम्भात्, वर्णदैर्घ्यादेः असत्यस्यापि सत्याक्षरगमकत्वदर्शनाच्चेति ॥ **व्याप्तिः**—इत्यादिः स्पष्टार्थः । सत्यैव च व्याप्तिः साधनोपयोगिनीत्यत्रापि नास्माकं सकलद्वैतानृतवादिनां दृष्टान्तसिद्धिरित्याह—**समानमेतदिति** ॥ किं च पूर्वं साम्यमापाद्य स्वपक्षे

---

तर्हि असत्यस्य तस्य गमकत्वे कथमन्यस्य वाष्पस्यागमकत्वमिति तत्राह—**धूमाभासस्येति** । अव्याप्तत्वमेव तत्रागमकत्वप्रयोजकं नासत्यत्वमित्यर्थः । असत्यत्व विशेषादाभासस्यापि व्याप्तत्वं किमिति न स्यात्तत्राह—**बहलेति** सर्वसत्यत्ववादिमत इव सर्वमिथ्यात्वेऽप्याभासविलक्षणत्वं व्याप्तावुपयुज्यते । न च सर्वमिथ्यात्वे हेतोर्हेत्वभास-वैलक्षण्यमेव कथं स्यादिति सांप्रतम् । सर्वसत्यत्ववाद इव तल्लक्षणयोगित्वेन वैलक्षण्योपपत्तेः इत्यर्थः । व्याप्तिवत्स्वरूपसत्यत्वमुपयोगीत्याशंक्य व्यभिचारान्नैवमित्याह—**व्याप्तीति** । गूढाभिसन्धिरुत्तरमाह—**सत्यापीति** । तावेव शङ्कापरिहारौ स्पष्टयति—**सत्यत्वादिति** । सत्यस्यैव साधकत्वमिति न नियमः ; मायावादिनं प्रत्यसिद्धेः । असिद्धेनैव सत्यत्वेन प्रत्यवतिष्ठमानं प्रति तथाभूते नैवमुचितमित्यर्थः । असत्यस्य साधकत्वे नास्ति दृष्टान्त इत्याशंक्य सत्यस्य साधकत्वेऽपि तदभावः समानः । अद्वैतवादिना सत्यत्वस्य हेत्वादौ क्वचिदप्यनङ्गीकारादित्याह—**न दृष्टान्तेति** । व्याप्तेरसत्यत्वे दृष्टान्तोऽस्तीति स्वपक्षे वैषम्यमाह—**व्याप्तिश्चेति** ॥ भवतु तथापि प्रकृते व्याप्तेरसत्यत्वं कथमित्यत आह—

तराभावे न संभवेत् । व्याप्यं च प्रतिबिम्बाद्यसत्यमिति तन्निष्ठव्याप्तिरसत्या कथं न दृष्टान्तः ? तथा चोष्ट्रलकुटन्यायापातो भवताम् । तथापि स्वयमसत्यं कथमन्यत्साधय-तीति चेत्, स्वयं सत्यं वा कथमिति समानः पर्यनुयोगः । तस्य सत्स्वभावत्वादिति चेत्, तुल्यमितरत्रापि । निस्तत्त्वमसत्त्वमिति चेन्नासत्यविवेकेन सत्यत्त्वोपपत्तेः । सत्यत्वविवेकान्निस्सत्त्वाङ्गीकारे त्वसत्यविवेकात् सत्यस्यापि तथाभावः स्यात् ।

विशेषं कथयति—व्याप्तिश्चेत्यादिना ॥ उष्ट्रलकुटन्यायस्य अयमर्थः—उष्ट्राणां खरादिभिर्दर्शनीयत्वे विवदमानानां प्रजापतिं पितरमुपगतानां प्रजापतिना च यान् कुरूपान्पश्यत तान्दण्डैर्विद्रावयतेत्यनुशिष्टानां यथा स्वजनमुण्डकाण्डताडनं दण्डै-स्तद्वद्वेदान्तानां दृष्टान्ते विवदमानानामेव दृष्टान्तदृष्टिरिति उक्तप्रकारेण व्याप्तेरसत्यतापि साधनोपयोगिनीत्यभ्यधायि । साधनं पुनरसत्यं कथमुद्भाव्यत इत्याह—तथापीति ॥ स्वयम् इत्यादिः स्पष्टार्थः । नास्मदभिप्रेतमसत्यं स्वरूपशून्यं सत्यत्ववैलक्षण्येन स्वरूपोपपत्तेरित्याह—नासत्यविवेकेनेति ॥ ननु यत्सत्यं न भवति तन्निस्स्वरूपम्, यथा नरखरतुरगशृङ्गता । ततो न सत्यवैलक्षण्येन स्वरूपलाभ इत्याशङ्क्याह—सत्यत्वेति ॥ तर्हि यदसत्यादन्यत् तत् निस्स्वरूपं यथा नरविषाणमिति सत्यस्यापि स्वरूपशून्यत्वं स्यादित्यर्थः । ननु सत्यादन्यदसत्यं तुच्छविलक्षणं नास्त्येव तत्र

व्याप्यंचेति ॥ ततः किमित्यत आह—तथाचेति ॥ परं प्रत्याहितदूषणेन स्वस्यापि दुष्टत्वं प्राप्तमित्यर्थः । उष्ट्रस्याग्रे प्रतिक्षिप्तलकुटेन प्रतिक्षेप्तृपुरुषप्रहार उष्ट्रलकुटन्यायः ।

ननु साधकत्वं नाम प्रमितिजनकत्वं तच्चासत्यत्वे प्रमाणस्यानुपपन्नमिति शङ्कते—सत्येति । स्वयमिति । गूढाभिसन्धिरुत्तरमाह—स्वयंसत्यमिति । जनकत्वं नाम जननावच्छिन्नत्वं तदुत्पन्नसत्क्षण एवेति शङ्कते—तस्येति ॥ जनकत्वस्य सत्येन व्याप्ति-रसिद्धेत्यभिप्रेत्य परिहरति । न च सत्त्वानङ्गीकारे कार्यकारणभावाभावः नियतपूर्वोत्तर-क्षणमात्रवृत्तित्वेनैव सत्त्वानङ्गीकारेऽपि तदुपपत्तेरित्यर्थः । असतो गगनारविन्दादेरजनकत्वा-ज्जनकत्वे सत्यमेव स्यादिति स्वाभिप्रायमुद्घाटयति - पूर्ववादी—निस्तत्त्वमिति ॥ निस्तत्त्वं निःस्वभावत्वमिति यावत् ।

असत्त्वाभावेऽपि निरुपाख्यवैलक्षण्येन जनकत्वोपपत्तेर्मैवमिति परिहरति—नासत्येति ॥ असत्यविवेकेनासतो विवेकेन तुच्छवैलक्षण्येनेति यावत् । सत्त्वाभावेन

मायामरीच्युदकादेश्चानुभवसिद्धेः निरुपाख्यविवेकस्य नरविषाणादेस्तु निस्तत्त्वस्य तथा-प्रतिभासासंभवात् । तत्रायमनैकान्तिकः । नाप्यनध्यवसितः, सपक्षगामित्वात् । नापि कालात्ययापदिष्टः, प्रत्यक्षाद्यनपहृतविषयत्वात् । कुम्भादिसत्यताग्राहिणा प्रत्यक्षेणैवापहृतविषय इवि चेत्, केयं कुम्भादेः सत्यता या प्रत्यक्षस्य गोचरा । सत्ता इति चेत्, सामान्यसत्ता चेत् सामान्यादेरसत्यतापातः । स्वरूपसत्ता चेत् स्वरूपाणां परस्पर-

प्रमाणाभावादित्याशङ्क्याह—**मायेति** ॥ ननु मायादेरपि नरविषाणादिसाम्य-मेवेत्याशङ्क्याह—**नरविषाणादेस्त्विति** ॥ नृशृङ्गादेस्तुच्छस्यापरोक्षप्रतिभासासं-भवान्मायादेश्चापरोक्षतयाऽनुभूयमानत्वान्न तुच्छत्वमेवेत्यर्थः । यस्मादुक्तनीत्या धर्मादीनां मिथ्यात्वेऽपि साधनोपयोगित्वं संभाव्यते तुच्छवैलक्षण्येन । ततस्तान्नानैकान्तोऽयं दृश्यत्वहेतुरित्युपसंहारः । क्रमप्राप्तत्वादनध्यवसितत्वमपि निषेधति—**नापीति** ॥ "साध्यसाधकः पक्ष एव वर्तमानोऽनध्यवसितः" इति ह्यनध्यवसितलक्षणमाचक्षते । तदप्यस्य नास्तीत्यर्थः । ननु प्रमाणबाधिते पक्षे वर्तमानः हेतुः कालात्ययापदिष्टः उच्यते मिथ्यात्वसाधकश्च दृश्यत्वहेतुः प्रत्यक्षादिबाधिते पक्षे वर्तत इत्याशङ्क्याह—**नापीति** ॥ प्रत्यक्षादीनां स्वविषयबोधनमात्रे व्यापारो न सत्यत्वग्रहणे येन तद्विरोधात् कालात्यया-पदिष्टता भवेदिति भावः । प्रत्यक्षं स्वविषयं बोधयत् सत्यतयैव बोधयतीत्यभिप्रेत्याह—**कुम्भादीति** ॥ **सिद्धान्ती** परिपृच्छति—केयं कुम्भादेः सत्यता या प्रत्यक्षस्य गोचरा उच्यते ? किं सत्ता किं वा विधिप्रत्ययविषयत्वम्, आहोस्विदबाधः ? किंस्विन्निरुपाख्यवै-लक्षण्यमिति प्रश्नार्थः । प्रथममनुवदति—**सत्ता चेदिति** ॥ तत्रापि सर्वत्र सन्निति समनुगतबुद्धिवेद्या सामान्यसत्ता किं सत्यता, किं वा स्वरूपसत्तेति विकल्प्य प्रथमं पराकरोति—**सामान्येत्यादिना** ॥ सामान्यविशेषसमवायानां वैशेषिकादिभिः सत्ता-

निरुपाख्यत्वानुमानमनुभवविरुद्धमित्याह—**मायेति** ॥ मायादेरपरोक्षप्रतिभासप्रवृत्ति-गोचरत्वस्यानुभवसिद्धत्वान्निरुपाख्ये च तथाऽभावादित्यर्थः ॥

**सपक्षे वर्तमानत्वादिति** । साध्यासाधकः पक्ष एव वर्तमानो हेतुरनध्यवसितः इति लक्षणत्वादत्र च सपक्षवृत्तित्वेन तदभावादित्यर्थः । अनपहृतविषयत्वमसिद्धमिति शङ्कते—**कुम्भादीति** ॥ सत्त्वस्य निरूपयितुमशक्यत्वादिति परिहरति—**केयमिति** ॥ सत्ताशब्देन किं सत्तासामान्यं विवक्षितमुत स्वरूपसत्त्वमिति विकल्प्याद्ये दोषमाह—

व्यावृत्तेः अव्यापकत्वादलक्षणम् ; तदनुगामितद्धर्माङ्गीकरणे सामान्यसत्तावैयर्थ्यम् , तेनैव सद्व्यवहारानुगत्युपपत्तेः तस्य च सामान्यरूपतापातस्तल्लक्षणोपपत्तेः । निःसामान्यस्य च सामान्यादेरसत्यतापत्तिः । विधिप्रत्ययविषयत्वं तदिति चेत् स्रक्सर्पादेरपि सत्यतापातः;

---

सामान्ययोगित्वन्नाङ्गीक्रियते । प्राभाकरेण द्रव्यादिष्वपि, ततस्ते सर्वेऽप्यसत्याः स्युरिति भावः । द्वितीयमनूद्य दूषयति—**स्वरूपेत्यादिना** ।। स्वरूपसत्वं नामैकं न सर्वेषु सत्येषु वर्तत इत्यव्यापकत्वादिदं लक्षणं न भवतीत्यर्थः । अथैतद्दोषपरिजिहीर्षया सर्वेषु सत्येष्वनुगतं स्वरूपसत्वं नामैकमभ्युपगम्यते, तत्राह—**तदनुगामीति** ।। सद्व्यवहारानुगतिरेव हि सामान्यसत्ताप्रयोजनं सर्वत्रानुगतश्चेत् स्वरूपसत्ताख्यो धर्मोऽङ्गीकृतस्तेनैव तत्संभवात् सामान्यसत्ता व्यर्था स्यादित्यर्थः । किं च सर्वत्रानुगतप्रत्ययवेद्यं सामान्यमुच्यते । तस्य च सर्वत्रानुगतस्य धर्मस्येदं लक्षणमस्तीति सामान्यत्वमापद्यत इत्याह—**तस्य चेति** ।। ननु भवतु सर्वत्रानुगतधर्मस्यैव सामान्यत्वं सत्यत्वं च को दोष इत्याशङ्क्याह—**निःसामान्यस्य चेति** ।। तदेवमाद्येषु चतुर्षु विकल्पेषु प्रथममपास्यानन्तरं व्यभिचारयति—**विधीत्यादिना** ।। **विधिप्रत्ययो** नमास्तीति ज्ञानमित्यर्थः । किञ्च रज्जुसर्पादेरभावस्य नास्ति ज्ञानविषयत्वादसत्यतापात तदा च भ्रान्तिबाधयोर्वैपरीत्यमापद्येत इत्याह — **तदभावस्येति** ।। तृतीयमनूद्य विकल्पयति—

**सामान्यसच्चेति** ।। सामान्यादेः सत्तारहितत्वादित्यर्थः । असामान्यपक्षेऽपि सत्तायाः असत्वं स्यात्तत्र सामान्यान्तराभावादिति द्रष्टव्यम् ।

द्वितीयपक्षेऽपि स्वरूपसत्वमनुगतमननुगतं वेति विकल्प्याद्ये दोषमाह—**स्वरूपसत्ताचेदिति** ।। द्वितीयं दूषयति—**तदनुगमीति** ।। ननु तथापि गौर्गौरिति प्रत्ययवत् सदिति प्रत्ययनिबन्धनतया सामान्यमङ्गीकर्तव्यमित्याशंक्य स्वरूपसत्वस्यैवानुवृत्तिप्रत्ययकारणत्वेन सामान्यरूपतोपपत्तेः सत्तासामान्यस्य वैयर्थ्यमित्याह—**तस्य चेति** ।। ननु तथापि गौर्गौरिति प्रत्ययवत् सदिति प्रत्ययनिबन्धनतया सामान्यमङ्गीकर्तव्यमित्याशंक्य स्वरूपसत्वस्यैवानुवृत्तिप्रत्ययकारणत्वेन सामान्यरूपतोपपत्तेः सत्तासामान्यस्य वैयर्थ्यमित्याह—**तस्यचेति** ।। तथापि स्वरूपसत्वायोगात् सामान्यादेरपि सत्वमव्याहतमित्यशंक्य तस्य सामान्यरूपतया सामान्यादिषु वृत्त्यनुपपत्तेः असत्वमेव स्यादिति परिहरति—**निस्सामान्यस्येति** ।। विधिप्रत्ययविषयत्वं अस्तीति प्रत्ययविषयत्वमिति यावत् । दूषयति—**स्रक्सादेरिति** ।। तस्याप्यस्तीति प्रत्ययविषयत्वादित्यर्थः । अव्या-

तदभावस्य चासत्यतापातः ; विभ्रमाविभ्रमविपर्ययापातात् । बाधाभावश्चेत् , आपाततः सर्वथा वा? नाद्यः, मरीच्युदकादावतिव्याप्तेः । नाप्युत्तरः, तस्य अस्मदादिप्रत्यक्षागोचर त्वात् । निरुपाख्यविवेकश्चेत् अविरोधः । सन् घटः इत्यादिप्रत्यक्षस्य कीदृग् गोचर इति चेत् ,' सन् अपरश्चन्द्रमाः' ' सद् गन्धर्वनगरम् ' इत्यादेर्यादृक् तादृगिति सन्तोष्टव्यम् ।

नानुमानमपि बाधकम्, प्रबलानुमानानिरूपणात् । आगमस्तु तद्विपर्यये । तत्सत्यमित्यवधारणात् । वाचारम्भणं विकारो नामधेयमिति च अपरस्य साक्षादसत्यताभिधानात् । " मृत्तिकेत्येव सत्यं " "प्राणा वै सत्यं " इति च भिक्षुकपादप्रसारणन्यायेन

---

**बाधाभाव इति** ॥ तस्य सर्वथा बाधाभावस्यास्मदादिप्रत्यक्षायोग्यत्वात् तस्य वर्तमानसंबन्धमात्रग्राहकत्वादित्यर्थः । चतुर्थविकल्पे तु कुम्भादिसत्यत्वग्राहिणा प्रत्यक्षेणाविरोधोऽस्मदनुमानस्येत्याह—**निरुपाख्येति** ॥ एवं तावच्चतुर्धा प्रत्यक्षग्राह्यं सत्यत्वं न संभवतीत्युक्ते प्रत्यक्षस्य विषयं पृच्छति—**सन् घट इति** ॥ व्यावृत्तत्वं नाम मायोपाधिकं सत्यत्वं गोचर इति परिहरति—**सन्नपर इति** ॥ **नानुमानमपि**—इति स्पष्टार्थः । ननु " मृत्तिकेत्येव सत्यम् " " प्राणा वै सत्यम् " इत्याद्यागमेन मृदादेः सत्यत्वग्राहिणा बाधात् कालात्ययापदिष्टतेत्याशङ्क्याह—**मृत्तिकेत्येव सत्यं प्राणा वै सत्यमिति** ॥ च श्रुत्याः न मृदादेः सत्यत्वं विवक्षितमिति शेषः । कुतः कुम्भाद्यलीकभावस्य विवक्षितत्वादिति हेतुरुत्तरत्र द्रष्टव्यः । कथं कुम्भाद्यलीकभावो विवक्षित इत्याशङ्क्याह—**भिक्षुकपादप्रसारणन्यायेनेति** ॥ यथा कश्चिद्वाराण

सत्वादलक्षणमित्याह —**तदभावस्येति** ॥ स्रक् सर्पो नास्तीति प्रतीतेस्तदभावस्य सत्वं न स्यादित्यर्थः । दूषणान्तरमाह—**विभ्रमेति** ॥ अस्ति रजतमिति प्रतीतेर्विभ्रमस्य सत्वं, नास्ति रजतमिति प्रतीतेरपि भ्रमस्य मिथ्यात्वं स्यादित्यर्थः । तदानीं बाधविरहः, किं वा कालान्तरे, उतासद्वैलक्षण्यमिति विकल्प्य क्रमेण दूषयति—**आपातत इत्यादिना** ॥ प्रतीयमानस्य प्रत्यक्षस्य विकल्पेन निराकरणायोगात् अस्त्येव कश्चिद्विषय इति शङ्कते—**सन्घट इति** ॥ दुर्निरूप एव विषय इति परिहरति—**सन्नपरइति** ॥

अस्तु तर्हि व्यवहारे बाधरहितत्वात् सत्यः [घटादिः], परिहरति— **नानुमानमपीति**—[बाधरहितत्वस्य] व्यवहारे सत्यसिद्धिमात्रवारकस्य व्यभिचारावारकतया शरीराजन्यत्वादिवद्व्याप्यत्वासिद्धेः, सत्यत्वा [ सिद्ध्या ] पातात् । न च विशेषण-

सांव्यवहारिकसत्यतानुपमर्देनैव । "स वा एष पुरुषोऽन्नरसमयः" "अन्योऽन्तर आत्मा प्राणमयः" "अन्योऽन्तर आत्मा मनोमयः" इत्यादौ आन्तरान्तरात्मत्वा-भ्युपगमेन बहिर्बहिरनात्मत्वप्रतिपादनवत् कुम्भायलीभावस्य विवक्षितत्वात् । अन्यथा वाचारम्भणश्रुतेः दार्ष्टान्तिकाननुगुणत्वप्रसङ्गात् "एवं सोम्य स आदेश" इति च दार्ष्टान्तिकव्याकोपप्रसङ्गाच्च । मृत्तिकाव्यतिरेकेण तद्विकाराभाववत् मूलकारणातिरेकेण

सीनिवासी सुज्ञो भिक्षुः वधूवर्गस्य कटकादित्सया एकं तावत्पादं निक्षिप्य पुनरपरं पादं प्रसारयति तथा श्रुतिरपि परमसुज्ञा मृदादेः सांव्यवहारिकसत्यत्वानुपमर्देनैव प्रथमं तावत् कुम्भायलीकभावं विवक्षति पश्चान्मृदादेरपि अलीकप्रतिपादनात् अद्वैतसत्यत्वं प्रसाधयितु-मित्यर्थः । ननु श्रुत्याभिहितमपि मृदादिसत्यत्वं न विवक्षितं किं तु अन्यदेव विवक्षित मित्यतिसाहसमित्याशङ्क्योदाहरणमाह—सवा एष इत्यादि ॥ यथाऽन्नमयप्राणमय-मनोमयविज्ञानमयानन्दमयानां प्रतिपादनं न स्वार्थपरं किन्तु व्यतिरिक्तप्रतिपादनपर-मित्यर्थः । ननु मृदादीनां सत्यत्वाभिधानं स्वार्थपरमित्यत्र यदि कश्चिद्दोषो दृश्येत तदा तदन्यपरता वर्ण्येत्याशङ्क्याह—अन्यथेति ॥ "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति" इत्यादिना ह्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तत्र दृष्टान्तापेक्षायामिदमवतारितम् "यथा सौम्यैकेन मृत्पिण्डेन" इत्यादि । तत्र यदि मृदादिसत्यत्वमपि विवक्ष्येत तदा सदद्वैतानुपपत्तेः सर्वमसमञ्जसं स्यादित्यर्थः । पूर्वं वाक्यद्वयस्य साधारण्येन तात्पर्य-मुपपाद्याधुना प्रत्येकमुपवर्णयति—मृत्तिकाव्यतिरेकेणेत्यादिना । इतश्च प्राणादीनां

---

भेदाद्भेदः तादृश [ विशिष्टधूमवतः ] अग्निमत्त्वाभावप्रसङ्गात् । कार्यमजनयतश्चार्थक्रिया-[कारित्वाभावप्रसङ्गात् । न च] कार्यजननाभावेऽपि सामर्थ्यमस्तीति वाच्यम् [सामर्थ्यस्य] कार्याभावेऽधिगन्तुमशक्यत्वात् । प्रवृत्तिलक्षणत्वेपि प्रतिभासेनानैकान्तिकत्वात् [स्वामि-कस्तूरीत्यादिना चरमधा ] तुविसर्गादेः स्वप्नेऽपि भावात् प्रतिभासितार्थप्राप्ते [श्च अर्थ-क्रियायाः सत्वे] न व्यभिचारित्वादित्यर्थः । आगमोऽपि प्रपञ्चासत्यत्वसाध [को] मृत्तिकेत्येव सत्यमिति दृष्टान्तगतैवकारस्य दार्ष्टा........मित्यर्थः । एवं तावदवधारणा-न्यथानुपपन्नत्वादेव प्रपञ्चमिथ्यात्वप्रतिपादनात् । मृत्तिकेत्येव सत्यमिति प्रपञ्चस्यापि सत्यत्वावगमात् न मिथ्यात्वविषयोऽसाविति तस्य प्रकारणिसत्यत्वप्रतिपादनपरत्वान्मैवमिति परिहरति—दृष्टान्तप्रदर्शनेति । मृत्तिकादौ सत्यशब्दप्रयोगो न साक्षात् सत्यविषयो-

स्तद्विकारस्यापि मृत्तिकादेरसत्यतायां तात्पर्यात् । " प्राणा वै सत्यं " इत्यत्रापि 'सत्यस्य सत्यं' ' तेषामेष सत्यं ' इति च उपक्रमोपसंहारयोः प्राणानां मुख्य-सत्यताङ्गीकारे विरोधात् । स्पष्टं च सांव्यवहारिकसत्यताङ्गीकारे वाक्यस्योपपत्तेः । " मायां तु प्रकृतिम् " इति च मायोपादानत्वेन, " नेह नाना " इति च निषेधेन साक्षाद्विलापनात् । " द्वासुपर्णा " इत्यादेस्तु अविद्यासिद्धद्वैतानुवादेनान्यत्र तात्पर्यो-पपत्तेः सत्यत्वाश्रवणात्; अपुरुषार्थे चातात्पर्यात् । " द्वितीयाद्वै भयं भवति " इति

व्यावहारिकमेव सत्यत्वं सत्यशब्देनाभिधीयत इत्याह—**मायां त्वित्यादिना** ॥

ननु " द्वा सुपर्णा " इत्यादिश्रुत्या जीवेश्वरभेदस्य सत्यस्यैव प्रतिपादनात् तद्बाधात्कालात्ययापदिष्टता भविष्यतीत्याशङ्क्याह —**द्वा सुपर्णेति** ॥ अविद्यासिद्धभेदानु-वादेन बिम्बप्रतिबिम्बयोरिव जीवब्रह्मणोरभेदे किमिति तात्पर्यं कल्प्यते सत्यत्वं विहाये-त्याशङ्क्याह—**सत्यत्वाश्रवणादिति** ॥ इतश्च भेदसत्यत्वं न विवक्षितं श्रुत्येत्याह—**अपुरुषार्थे चेति** ॥ अज्ञातं सप्रयोजनं श्रुत्या तात्पर्येण विवक्ष्यते । भेदस्तु लोकसिद्धो निष्प्रयोजनश्चेति न विवक्षित इत्यर्थः । भेदस्य निष्प्रयोजनत्वमेव कुतोऽवधार्यत इत्या-शङ्क्याह — **द्वितीयादिति** ॥ तदेवं नागमविरुद्धः कालात्ययापदिष्टः । क्रमप्राप्तोप-

ऽसाविति परिहरति—**सांव्यवहारिकेति** । साक्षात् संभवति किमिति परम्परयाभिधान-मित्याशंक्य मन्दाधिकारिणः प्रतिपादनान्नैवमिति परिहरति—**स वा एष इति** ॥ मृत्ति-कादिनिर्दिहयतीत्यत आह—**अन्यथेति** ॥ दूषणान्तरमाह —**एवं सोम्येति** । **मृत्ति-काव्यतिरेकेणेति** छन्दोगश्रुतेर्गतिं प्रदर्शयति, उपक्रमोपसंहारयोर्विप्रतिषेधं प्रसक्तौ सत्यस्यसत्यमिति ब्रह्मणः सत्यत्वेन उपसंहारात् प्राणानामपि सत्यत्वे सति उपक्रमे दृश्यनिषेधप्रसङ्गादित्यर्थः । प्राणेषु च सांव्यवहारिकसत्वविवक्षयैव प्रयुक्त इत्याह —**स्पष्टञ्चेति** । ' मायां तु ' इति मायामयत्वप्रतिपादनात् प्रतिपन्नोपाधौ निषे [धप्रतियो गित्वस्य नेहनानेति श्रुत्या प्रतिपादनाच्चेत्याह]**मायां त्विति** । भेदस्यापि श्रुतिप्रतिपा-दितत्वात् सत्यत्वमित्याशङ्क्य[तात्पर्यविषय] त्वाभावान्नैवमित्याह —**द्वा सुपर्णेति** ॥ अन्यत्रासंसारिब्रह्मस्वरूपे प्रतिपाद्यत्वेऽपि भेदस्य सत्यत्वाधिगतेर्न परमार्थसिद्धिरित्यत आह—**सत्येति** ॥ अपुरुषार्थत्वादपि न भेदस्य प्रतिपाद्यत्वमित्याह—**अपुरुषार्थेति** ॥ अपुरुषार्थत्वमेव दर्शयति—-**द्वितीयादिति** ॥ सत्यत्वमिथ्यात्वयोरुदासीनत्वादुपमानस्य

स्वयमपुरुषार्थताभिधानात्; उपमानस्य तु सादृश्यस्वरूपोपक्षीणस्य सत्यत्वासत्यत्वयोः ताटस्थ्यात्।

एवं अर्थापत्तिरपि बाधिका भवन्ती का भवेत्? संव्यवहारान्यथानुपपत्तिरिति चेन्न, स्वप्नवदुपपत्तेः। तदविसंवादानुपपत्तिरिति चेत्, कोऽयमविसंवादो नाम? मानान्तराविरोधश्चेत्। सोऽसिद्धः, श्रुत्यैव विरोधात्। प्रातिभासिकबाधवैधुर्यं चेत्, आपाततः तत्स्वप्नेऽपि समानम्। सर्वथा त्वशक्यज्ञानमित्युक्तम्। सुखदुःखपर्यन्तता तु स्वप्नेऽपि

मानविरोधं परिहरति—**उपमानस्य त्विति** ॥ अर्थापत्तिरपि बाधिका न भवतीत्याह—**अर्थापत्तिरपीति** ॥ अर्थापत्तिरपि मिथ्यात्वानुमानस्य बाधिका भवन्ती का तावत् अर्थापत्तिः? किं संव्यवहारानुपपत्तिः, किं वा तदविसंवादानुपपत्तिः, आहोस्वित् सुखदुःखपर्यन्ततानुपपत्तिः, किं स्वित् आशामोदकोपार्जितमोदकयोः वैषम्यानुपपत्तिः, आहोस्वित् रसवीर्यविपाकानुपपत्तिः उताद्वैतज्ञानानुपपत्ति इति प्रश्नार्थः। प्रथमकल्पेऽन्यथाप्युपपत्तिः दूषणमित्याह—**संव्यवहार इत्यादिना** ॥ व्यवहारमात्रं मिथ्यात्वेऽपि संभवति। तस्याविसंवादः सत्यत्वमन्तरेणानुपपद्यमानः सत्यत्वं गमयतीति द्वितीयविकल्पमनुवदति—**तदविसंवाद इति** ॥ तत्रापि वक्तव्यम्। कोऽयमविसंवादो नाम. किं मानान्तराविरोधः, किं वा बाधवैधुर्यमिति विकल्प्य दूषयति—**कोऽयमित्यादिना** ॥ अनुदयमन्यथाप्युपपत्तिं च दूषणद्वयं द्वितीयपक्षेऽभिधाय तृतीयचतुर्थपञ्चमेषु अन्यथाप्युपपत्तिमाह—**सुखदुःखे इत्यादिना** ॥ कटुकाम्लादिरसानां वीर्यविपाकादिवैषम्यमप्येवं स्वप्नवदसत्यतानुपमर्देन पदार्थानां स्वगतविशेषात् अस्तु जागरे; कारणानुपपत्तिरित्यर्थः। ननु सर्वस्यासत्यताऽविशेषे न संभवति स्वगतो विशेषः पदार्थानामित्या-

न प्रपञ्चे सत्यताबोधकत्वमित्याह—**उपमानस्येति** ॥ किं व्यवहारमात्रानुपपत्तिः किं वा अविसंवादिव्यवहारानुपपत्तिरिति विकल्पाद्यं दूषयति—**संव्यवहारेति** ॥ द्वितीयविकल्पमुत्थापयति—**तदविसंवादेति** ॥ अविसंवादः किं मानान्तराविरोधः किंवा बाधविरहः सोऽप्यापाततः सर्वथा वेति विकल्प्य क्रमेण दूषयति—**कोऽयमिति** ॥ उक्तं - तस्याः सदादिप्रत्यक्षगोचरत्वादित्यत्र। प्रतिभासितार्थस्य सुखदुःखजनकत्वान्यथानुपपत्तिरितीमं पक्षं निराकरोति—**सुखदुःखेति** ॥ सर्वस्य मिथ्यात्वे चाशामोदकोपार्जितमोदकयोर्विशेषो न स्यात् इत्याशंक्य स्वप्नवदेनदुपपन्नमिति

समाना । आशामोदकोपार्जितमोदकयोरस्त्येव स्वप्नेऽपि कियद्वैलक्षण्यम् । रसवीर्यविपाकादिवैषम्यमप्येवम् । एवमसत्यतानुपमर्दनेनावान्तरभेदोऽस्तु जागरे, का नाम वस्तुक्षतिः ? सत्यताविशेष इव असत्यताविशेषेऽपि प्रतिव्यक्तिगतस्वभावभेदस्य गोमयपायसीयन्यायेनापाकरणप्रसङ्गात् ; प्रसङ्गे वा जगद्वैचित्र्यस्यैव विलोपप्रसङ्गात् । अद्वैतज्ञानमप्यसत्यादेव प्रमात्रादिभेदादुपपन्नम् । असत्यस्य च सत्यगोचरविज्ञानकारण-

शङ्क्याह—**सत्यताविशेष इत्यादिना** ॥ यथा गोविकारत्वाविशेषेऽपि गोमयपायसयोरवान्तरवैलक्षण्यं तथा प्रातिस्विकस्वभावभेदोऽस्मत्पक्षेऽपि त्वत्पक्ष इव निराकर्तुं न शक्यत इत्यर्थः । असत्यताविशेषनिराकरणप्रसङ्गे च त्वत्पक्षेऽपि सत्यताविशेषात् प्रातिस्विकस्वभावनिराकरणमापद्यत इत्याह—**प्रसङ्गे वेति** ॥ इदानीं षष्ठविकल्पेऽप्यन्यथाप्युपपत्तिमाह—**अद्वैत इति** ॥ नन्वसत्येभ्यः प्रमात्रादिभ्यः समुत्पन्नं ज्ञानमपि असत्यमेवेति

परिहरति—**आशामोदकेति** ॥ रसवीर्यविपाकवैषम्यमपि स्वप्नवदुपपन्नत्वान्न सत्यतासाधकमित्याह—**रसेति** ॥ जागरितस्यासत्यत्वाविशेषेऽपि अवान्तरवैषम्यस्यापि स्वप्नवदुपपन्नत्वान्न सत्यतासाधकत्वमित्याह—**रसेति** ॥ जागरितस्यासत्यत्वाविशेषे व्यवहारवैषम्यं स्वभावभेदाद्भवतीति दार्ष्टान्तिकमुपसंहरति—**एवमेवेति** ॥ जागरेऽप्येवमस्त्वित्यन्वयः ।

सर्वथा सत्यत्वाविशेषे मृद एव घटः तन्तुभ्य एव पट इति व्यवस्था न भवेत् । स्वप्नवत् जाग्रत्प्रपञ्चस्य व्यवहारदशायामेव बाधाद्वैपरीत्येन वा स्वप्नस्यापि तथात्वं स्यादित्याशङ्क्य परिहरति—**सत्यतेति** ॥ सर्वस्य सत्यत्वे तन्तुभ्य एव पटः मृदः एव घटः इति यथा स्वभावभेदाद्व्यवस्था यथा च स्वप्नजाग्रत्प्रत्यययोः स्वरूपसत्यत्वे बाधाबाधव्यवस्था तथैवासत्यत्वेऽपि सर्वमुपपद्यते । अनुमानं पुनः गोविकारत्वात् गोमयमपि पायसकरणसमर्थमितिवत् बाधितविषयतया कालात्ययापदिष्टमित्यर्थः । विपक्षे बाधकमाह—**प्रसङ्गे वेति** ॥ ननु प्रमात्रादिभेदस्यासत्यत्वे तज्जन्याद्वैतब्रह्मविषयज्ञानमपि बाष्पधूमजन्यवह्निज्ञानवदसत्यं स्यादित्यत आह—**अद्वैतज्ञानमिति** ॥ उपपत्तिमेवाह—**असत्यस्य चेति** ॥ असत्यस्यापि प्रतिबिम्बादेर्बिम्बादिसिद्धावङ्गतोपलम्भादित्यत्र सत्यज्ञानकारणता वर्णितेत्यर्थः । उदाहरणान्तरमाह—**वर्णितं चेति** ॥ द्वैतवादिमते बिम्बादिज्ञानानां स्वरूपतस्सत्यत्वात्प्रमात्वमुपपन्नम् । भवत्पक्षे तु ज्ञानानामपि

तोपवर्णिता । वर्णितं च स्वप्नकामिनीसन्दर्शनादेरसत्यस्यैव सत्यार्थसूचकत्वम् । न च विज्ञानस्यापि स्वरूपसत्यता प्रमात्वोपयोगिनी । विषयसत्यता तु तथा, तस्या अव्यभिचारित्वात् । इतरस्यास्तु भवदभिमतस्वरूपसत्यभावेऽपि असत्यगोचरे रजतादिबोधे व्यभिचारात् ।

अभावोऽपि न भावरूपप्रपञ्चसत्यतागोचरः संभवी । प्रपञ्चे धर्मिणि बाधगोचरत्वाभावः सत्यत्वं संभवीति चेन्न ; आपाततस्तदभावस्यातल्लक्षणत्वात् ; अन्यस्मिश्चा-

---

न प्रमाणं स्यादित्याशङ्क्याह—**न च विज्ञानस्यापीति** ॥ विषयसत्यता तु तथा प्रमात्वोपयोगिनी तस्याः सर्वत्राव्यभिचारादित्यर्थः । विषयसत्यताशब्देन न ज्ञाततामिधीयते ; स्मृतिज्ञानस्यापि प्रमाणतापसङ्गात् । ननु ज्ञानस्य स्वरूपसत्यतापि प्रमात्वोपयोगिनी किं न स्यादित्याशङ्क्याह—**इतरस्यास्त्विति** ॥ भवतामभिमतः स्वस्वरूपसत्यभावो यस्यासत्यगोचरस्य रजतादिबोधस्य तस्मिन्नितरस्याः स्वरूपसत्यतायाः प्रामाण्यव्यभिचारादित्यर्थः । तस्माद्‌द्वैतज्ञानस्यासत्यप्रसूतस्यापि प्रमात्वसंभवात् नार्थापत्तिर्बाध इति स्थितम् ।

इदानीं क्रमप्राप्ताभावप्रमाणविरोधं परिहरति—**अभावोऽपीति** ॥ अभावप्रमाणं किलाभावं गोचरयति, न भावरूपां प्रपञ्चसत्यतामित्यर्थः । सत्यता न भावरूपा किन्तु बाधविषयत्वाभावः सत्यत्व तस्मिन् संभवत्यभावप्रमाणमित्याह—**प्रपञ्चधर्मिणीति** ॥ किमापाततो बाधाभावः अभावप्रमाणेन प्रपञ्चे धर्मिणि गृह्यते किं वा सार्वकालिकबाधाभाव इति विकल्प्य दूषणमाह—**नापातत इति** ॥ आपाततो बाधाभावस्य सत्यलक्षणत्वाभावादित्यर्थः । द्वितीयविकल्पेऽपि सार्वकालिकबाधस्य योग्यानुपलब्धेरभावात् अभावप्रमाणेन प्रपञ्चे धर्मिणि तदभावो ग्रहीतुं न शक्यत

---

स्वरूपसत्वात् प्रमात्वं न स्यादित्याशंक्य परिहरति—**न च विज्ञानस्येति** ॥ विषयसत्यत्वासत्यत्वमेव प्रमात्वोपयुक्तम् न स्वरूपसत्यत्वं, भ्रान्तिज्ञानेषु व्यभिचारादित्यर्थः । अभावस्याभावमात्रविषयतया न भावरूपप्रपञ्चसत्यविषयत्वमित्याह—**अभावोऽपीति** ॥ बाध्यत्वाभावलक्षणं सत्यत्वं प्रपञ्चे धर्मिणि अभावप्रमा स्यादिति शङ्कते—**प्रपञ्चे धर्मिणीति** ॥ किमापाततो बाध्यत्वाभावः प्रतीयते । किं वा सर्वथेति विकल्प्य क्रमेण दूषयति—**नापातत इति** ॥ अतल्लक्षणत्वान्मिथ्याभूतेष्वपि गतत्वेनातिव्यापकत्वादित्यर्थः । सर्वकालबाधस्य ग्रहीतुमयोग्यत्वेन तत्र योग्यानुपलब्धेरभावान्ना-

योग्यानुपलब्धेः । तदेवं न कालातीतः । नापि सत्प्रतिपक्षः प्रतिप्रयोगानिरूपणात् प्रतिभासमानत्वहेतोः मायामरीच्युदकादिना व्यभिचारात् विपञ्चितत्वादन्यत्र विपर्ययज्ञान-सद्भावस्य । अबाध्यत्वस्य च सत्यतापरपर्यायस्य साध्यत्वेनाहेतुत्वात् ; अर्थक्रियाकारित्व-स्यालीकस्वप्नकामिनीसंभोगादिभिरनैकान्त्यात् ; सत्यस्य चात्मनस्तदनङ्गीकारेण सपक्षा-प्रवेशिनो विपर्ययव्याप्त्या विरुद्धत्वात्—इति हेत्वाभासोद्धारः । उभयसिद्धमिथ्या-

---

इत्यर्थः । यस्मादेवं न षट्प्रमाणविरुद्धः प्रतिज्ञार्थः तस्मादित्युपसंहरति—**तदेवमिति** ॥ एकस्मिन् धर्मिणि तुल्यलक्षणविरुद्धहेतुद्वयोपनिपातो विरुद्धाव्यभिचारी सत्प्रतिपक्ष इति च गीयते । तथाभावोऽप्यस्य नास्तीत्याह—**नापीति** ॥ विवादपदं सत्यम् प्रतिभास-मानत्वात् आत्मवत् इति प्रतिबलप्रयोगमाशङ्क्याह—**प्रतिभास इति** ॥ प्रमाणेनेति विशेषणे भागासिद्धिः ; अनुभववेद्यस्यापि कस्यचिदङ्गीकारादिति द्रष्टव्यम् । ननु माया-दिकमपि सत्यमेव, विपर्ययज्ञानानिरूपणात् इत्याशङ्क्याह—**विपञ्चितत्वादिति** ॥ ननु विवादपदं सत्यम्, अबाध्यत्वात्, आत्मवत् इति । न, साध्यसमोऽयं हेत्वाभास इत्याह—**अबाध्यत्वस्य चेति** ॥ विवादपदं सत्यम्, अर्थक्रियाकारित्वात्, आत्मवत् इत्याशङ्क्याह—**अर्थक्रियेति** ॥ किं च सपक्षस्य चात्मनोऽविक्रियत्वेनार्थक्रियाकारि-त्वादिति हेतुः तत्र न वर्तते । विपक्षात् स्वप्नकामिन्या न व्यावर्तत इति विरुद्धोऽयं हेत्वा-भास इत्याह— **सत्यस्य चेति** । उक्तप्रकारेण हेतुदोषः परिहृत इत्याह—**इति हेत्वा-भासोद्धार इति** ॥ इदानीं दृष्टान्तावयवदूषणमपाकरोति—**उभयेत्यादिना** ॥

भावतस्तत्सिद्धिरित्याह—**अस्मिन्निति** ॥ प्रबलप्रयोगाभावमेवाह—**प्रतिभासमानेति** ॥ विपर्ययज्ञानस्याभावान्नानैकान्तिकशङ्केत्याह—**विपञ्चितत्वादिति** ॥

अन्यत्र **प्रमाणमालासु** । अबाध्यत्वमर्थक्रियाकारित्वं वा सत्यतासाधनतया प्रतिपक्षो भविष्यतीत्याशङ्क्य साध्याविशिष्ट्यादाद्यः प्रयोगोऽनुपपन्न इत्याह—**अबाध्य-त्वस्येति** ॥ द्वितीयपक्षं दूषयति—**अर्थक्रियेति** ॥ दूषणान्तरमाह—**सत्यस्य चेति** ॥ आत्मनोऽपरिणामित्वेनार्थक्रियासामर्थ्यानवगमे सपक्षावृत्तित्वेन विपक्षमात्रवृत्तितया हेतोर्विरुद्धत्वादित्यर्थः । दृष्टान्तस्य साधनविकलता पुनरस्त्येवेति हृदयम् । हेत्वाभासोद्धार-मुपसंहरति—**इति हेत्वाभासेति** ॥ दृष्टान्ते दोषान् परिहर्तुं उपक्रमते—**उभय-सिद्धस्येत्यादिना** ॥ उभयसिद्धो वादिप्रतिवादिसिद्धो मिथ्याभावो यस्य दृश्यस्य शुक्ति-रजतादेस्तत्तथा तेन दृष्टान्तस्य साध्यसाधनवत्त्वात् साध्यसाधनवैकल्यं परिहृतमित्यर्थः ।

भावस्य दृश्यस्य च शुक्तिरजतादेः संभवात् । साध्यधर्मिवत् दृष्टान्तधर्मिणोऽपि प्रसिद्धि-मात्रेणोपपत्तेः प्रमाणविशेषणवैयर्थ्यान्न साध्यसाधनोभयवैकल्याश्रयहीनादयो निदर्शन-दोषाः । यदित्थं तत्तथा इति च साधारणप्रयोगादेव सर्वोपसंहारसिद्धेः । यद्यदित्थं तत्तथेति च वीप्साया वैयर्थ्यात् 'गौर्न पदा स्प्रष्टव्या' इत्यादिनिदर्शनोपपत्तेः क्वचि-द्वीप्सयाः स्पष्टार्थत्वात् ; अनन्वयविपरीतान्वययोरत्यन्तानाशङ्कनीयत्वात् । यथालक्षणं

---

उभयोरपि वादिप्रतिवादिनोः सिद्धो मिथ्याभावो यस्य स तथोक्तः । तस्य दृश्यत्वस्य च शुक्तिरजतादेः संभवात् न साध्यसाधनोभयवैकल्याश्रयहीनादयो निदर्शनदोषा इत्युत्त-रेणान्वयः । ननु दृष्टान्तधर्मी किं प्रमाणेन प्रतिपन्नः उताप्रतिपन्न ? प्रथमे साध्यवैकल्यम् । चरते त्वाश्रयहीनं निदर्शनमित्याशङ्क्याह—**साध्यधर्मिवदिति** ॥ एवं तावदर्थ-गतदूषणे परिहृतेऽपि वचनदोषाद्भविष्यति इत्यत आह-**तद्यदित्थं तत्तथेति** । या या गौः सा न पदा स्पर्शनीयेति वीप्साभावेपि यथा सकलगवां पदासंस्पर्शः सिध्यति तद्वदित्यर्थः । परिपूर्णव्याप्तिसिद्धेरित्यर्थः । ननु केचित् निपुणा अपि वीप्सां प्रयुञ्जाना दृष्टाः क्वचिदित्या-शङ्क्याह— **क्वचिच्चिति** ॥ तस्माद्वीप्साया अप्रयोगो न वचनदोषतामापादयति । तथाप्यनन्वयादिलक्षणो वचनदोषो भविष्यतीति न शङ्कितुमपि शक्यमित्याह— **अनन्वयेति** ॥ अनन्वयाभिधानं व्यतिरेकेण दृष्टान्ताभिधानम् अन्वयो नाम विवादपदं मिथ्या ; दृश्यत्वात्, यथा शुक्तिरजतं । यन्मिथ्या तद्दृश्यं यथा शुक्तिरजतमिति

तथापि प्रमाणाप्रतिपन्नत्वादाश्रयहीनो दृष्टान्त इत्यत आह—**साध्येति** ॥ आदिशब्देन सन्दिग्धसाध्यसाधनभावादयः । तथाप्यस्ति वचनदोषः, यद्यद्दृश्यं तत्तन्मिथ्येति वीप्साऽप्रयोगादित्याशङ्क्याह— **यदीति** । यदित्थं तत्तथेति साधारणप्रयोगादेव सार्वत्रिकव्याप्तिसिद्धेर्वीप्सावैयर्थ्यमित्यर्थः । तत्र दृष्टान्तमाह— **गौर्गौरिति** ॥ या या गौरिति वीप्साकरणाभावेऽपि सामान्येन सर्वगोस्पर्शनिषेधोऽवगम्यते तद्वदित्यर्थः । अन्यत्र वीप्साप्रयोगस्य का गतिरित्यत आह—**क्वचिदिति** ॥ तथापि वचनदोषान्तरस्य कथं परिहार इति तत्राह—**अनन्वयेति** ॥ शुक्तिरजतमित्येतावन्मात्रमन्वयः । यन्मिथ्या तद्दृश्यमिति विपरीतान्वयः । अत्र च यद्दृश्यं तन्मिथ्येति सम्यगभिधानादुभयो-रनाशङ्कनीयत्वमित्यर्थः ।

6

चोपनयादिविन्यासान्न वाचनिकोऽपि दोष इत्यशेषमतिमङ्गलम् ॥

श्रीमदानन्दबोधस्य विबुधानन्ददायिनी ।
स्रवन्त्यमृतधारेव सेव्यतां कृतिभिः कृतिः ॥

चेदभिधीयते यद्दृश्यं तन्मिथ्या इति वक्तव्ये सति, तदा विपरीतान्वयो भवति । तदुभयमप्यस्माभिः नाकारीत्यर्थः । उभयनिगमनप्रतिबद्धोऽपि कश्चिद्दोषो नास्तीत्याह— **यथालक्षणं चेति** ॥ स्वकृतेः गुणसंकीर्तनेन विद्वद्भिः सेव्यतामाशंसते— **श्रीमदानन्दबोधस्येति** ॥

श्रीमदानन्दबोधीयकृतीभस्य सुधीमता ।
पन्थाः प्रदर्शितो येन तस्मै श्रीगुरवे नमः ॥
श्रीनरेन्द्रपुरी नाम यतिश्चकार चन्द्रिकाम् ।
हितार्थाय हि मन्दानां सन्तोषार्थं विजानताम् ॥
क्षिप्तौ भक्त्या यतःश्लोकौ सुधिया तत्र केनचित् ।
तत्पादसेवकेनेमौ नातो हेयौ सुपण्डितैः ॥

**श्रीमदनुभूतिस्वरूपाचार्यकृतायां न्यायदीपावलीटीकायां**
**मिथ्यात्वप्रकरणं समाप्तम् ॥**

---

एवमुदाहरणदोषं परिहृत्य उपनयनिगमनदोषं परिहरति—**यथेति** ॥ उदाहरणानन्तरं हेतोः पक्षेऽस्तित्वख्यापकं वचनमुपनयः । उपनयानन्तरं सहेतुकं प्रतिज्ञायाः पुनर्वचनं निगमनमिति वादिप्रतिवादिसम्मतलक्षणानतिक्रमेण तयोरुपन्यासात् तद्गतवाचनिकदोषशङ्कापि नावतरतीत्यर्थः । श्रोतॄणां प्रवृत्तिसिद्धये स्वकीयं ग्रन्थं स्तौति— **श्रीमदिति** ॥ अमृतधारा विबुधानां देवानामानन्ददायिनी कृतिस्तु विशिष्टानां बुधानामित्यमृतधारासाम्यम् ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्यचित्सुख-**
**मुनिपूज्यश्रीपादश्रीशिष्यसुखप्रकाशमुनि-**
**विरचितायां न्यायदीपावलीतात्पर्य-**
**टीकायां प्रपञ्चमिथ्यात्वम् ॥**

—:*:—

भो भो दुर्दर्शनाभ्यासविपर्यासितमतयः सर्वलोकावसितमपि विपर्यासमनङ्गी-कुर्वाणा विवेकाग्रहमेवायथाव्यवहारहेतुमाचक्षाणाः कथं प्रतिबोधनीयाः । उच्यते— विवादाध्यासिता प्रवृत्तिः पुरोवर्तिगोचररजतज्ञानपूर्विका, रजतेच्छाधीनपुरोवर्ति-प्रवृत्तित्वात् । यदुक्तसाधनम्, तदुक्तसाध्यम्, यथा सम्यग्रजतप्रवृत्तिः; तथेयम्; ततस्तथा । नायमसिद्धो हेतुः, विशिष्टप्रवृत्तित्वस्य उभयसिद्धत्वात् ।

---

शुक्तिरूप्याद्युदाहरणेन प्रपञ्चनिचये मिथ्यात्वमसाधि । ये तु तन्मिथ्यात्वे विप्रतिपद्यन्ते तत्प्रतिबोधनायेदं प्रकरणमारभ्यते ॥ भोः भोः विपर्यासमनङ्गीकुर्वाणाः कथं प्रतिबोधनीयाः इति संबन्धः । कस्मात्ते विपर्यासं नाभ्युपगच्छन्तीत्याकाङ्क्षा-यामाह— दुर्दर्शनाभ्यासविपर्यासितमतय इति ॥ ननु विपर्ययस्याभावादेव तेषामनभ्युपगमः, न तु कुत्सितदर्शनाभ्यासान्धीकृतचेतस्त्वादित्याशङ्क्याह— सर्वलोकावसितमपीति ॥ ननु विपर्ययाभावे कथं ते रजतार्थिनः शुक्तौ प्रवृत्तिं व्यवस्थापयन्तीत्याशङ्क्याह विवेकाग्रहमेवेति ॥ तत्प्रतिबोधनायानुमानमारच-यति—उच्यत इति ॥ प्रवृत्तिः पुरोवर्तिरजतज्ञानपूर्विकेत्युक्ते वणिग्वीथ्यादि-प्रवृत्त्या सिद्धसाधनं स्यात् । तदर्थमाह —विवादाध्यासितेति ॥ रजतस्फुरणा-विवेकात् प्रवृत्तिं वाञ्छतः सिद्धसाधनतां व्यवच्छिनत्ति । पुरोवर्तिग्रहणेन प्रवृत्त-त्वादित्युक्ते घटादिप्रवृत्तावनैकान्तिकता स्यात् । तदर्थमाह— रजतेच्छाधीनेति ॥ रजतेच्छाधीनप्रवृत्तित्वादित्युक्ते रजतेच्छावशात् देशान्तरप्राप्त्यायत्ते रजते या प्रवृत्तिः तत्रानैकान्तिकः स्यात् तदर्थमाह—पुरोवर्तीति ॥ साधनेच्छाधीन-पुरोवर्तिप्रवृत्तावनैकान्तिकतापरिहाराय रजतग्रहणम् । नायमसिद्ध इत्यादिः

---

सांख्यैरयथार्थज्ञानस्यानङ्गीकरणाच्छुक्तिरूप्यवदिति दृष्टान्तस्य साध्यविकलतया कथं दृश्यत्वानुमानेन प्रवृत्तिरिति शङ्कानिराकरणायोत्तरवादमारभमाणः प्रथममाकाङ्क्षा-मुत्थापयति भोभो इति ॥ अयथार्थज्ञानानङ्गीकारे कथं व्यवहार इत्यत आह— विवेकाग्रहमिति ॥ विवादाध्यासिता प्रवृत्तिश्शुक्तिशकलादौ रजतार्थिप्रवृत्तिः पुरोवर्तिज्ञानपूर्विका । रजतज्ञानपूर्विकेत्यभिधाने ग्रहणस्मरणपूर्वकत्वस्याख्यातिवादि-भिरभ्युपगमेन सिद्धसाधनतेति तद्व्यावृत्त्यर्थं पुरोवर्तिरजतविषयज्ञानपूर्विकेत्युक्तम् । प्रवृत्तित्वादित्यभिधाने अनिच्छतः पवनसलिलादिनुद्यमानस्य तदज्ञानपूर्विकायां प्रवृत्तौ व्यभिचारः । तद्व्यावृत्त्यर्थं रजतेच्छाधीनेति पदम् । इच्छाधीनपुरोवर्तिपदार्थप्रवृत्तौ व्यभिचारनिवारणार्थं रजतपदम् । देशान्तररजतार्थिप्रवृत्तौ व्यभिचारनिवारणार्थं

स्यादेतत्। पुरोवर्तिरजतगोचररजतज्ञानपूर्वकत्वं मा भूत्; भवतु च रजतार्थिनस्तत्र प्रवृत्तिः; तथा च विपक्षे बाधकतर्काभावादप्रयोजक इति चेत्, न; तादृग्रजतज्ञानमन्तरेण तथाविधप्रवृत्त्यङ्गीकरणे तस्या आकस्मिकत्वप्रसङ्गात्। न हीदमिति साधारणज्ञानं विशेषार्थिनं प्रवर्तयेत् अतिप्रसङ्गात्। नापि तटस्थं रजतस्मरणं पुरोवर्तिनि प्रवृत्तिकारणम्, अशुक्तिशकलेऽपि तादृशि तत्प्रसङ्गात्। अथ विवेकाग्रहं प्रवृत्तिहेतुं ब्रूयात्, स प्रनिवक्तव्यः — कोऽयं विवेकाग्रहः? इति किं भेदाग्रहः, किंवा भेदकाग्रहः, किंस्वित्परस्पराभावाग्रहः, किंवा असंसर्गाग्रहः? यदि भेदाग्रहः, स यद्यप्रतिभासमानयोः अतिप्रसङ्गः। प्रतिभासमानयोरपि

---

स्पष्टार्थः। यदि भेदाग्रहः तत्रापि वक्तव्यं किमप्रतिभासमानयोः उत प्रतिभासमानयोरिति। प्रथमं दूषयति—**स यदीति**॥ यद्यप्रतिभासमानांशयोर्भेदाज्ञानादन्यार्थिनोऽन्यत्र प्रवृत्तिः तदा घटार्थिनोपि पटे प्रवृत्तिः स्यात्, तयोरप्यप्रतीयमानांशयोः भेदानवगमादित्यर्थः। प्रतिभासमानयोरपि किं प्रतिभास्ययोः किं वा प्रतिभासयोरिति विकल्प्य प्रथममपाकरोति—यदि **प्रतिभास्ययोरिति**॥ इदमंशरजतांशयोः प्रतिभासमानयोः तत्स्वरूपभूताभेदोऽपि प्रतिभासत एव। कथं तदग्रह इत्यर्थः। द्वितीयं दूषयति—**प्रतिभासयोरपीति**॥ ग्रहणस्मरणयोः स्वयं-

---

पुरोवर्तीति पदम्। विशिष्टप्रवृत्तित्वस्य रजतेच्छाधीनपुरोवर्तिप्रवृत्तित्वस्याप्रयोजकत्वमाशङ्क्य परिहरति—**स्यादेतदित्यादिना**। ज्ञानद्वयस्य हेतोर्विद्यमानतया कथं प्रवृत्तेराकस्मिकत्वमित्याशङ्क्य उभयस्यापि प्रवृत्तिहेतुत्वं निराकरोति—**न हीति**॥

**अतिप्रसङ्गादिति**॥ अन्यस्मिन्नपि साधारणधर्मवत्तयावगते रजतार्थिप्रवृत्तिप्रसङ्गादित्यर्थः। अस्तु तर्हि रजतज्ञानं हेतुरित्यत आह—**नापीति**॥ तटस्थं पुरोवर्त्यनालम्बनं इति यावत्। **तादृशि** साधारणधर्मवति अगृहीतव्यावर्तके। धर्मे विवेकाग्रहं चतुर्धा विकल्पयति—**कोऽयमित्यादिना**॥ भेदाग्रहः किमप्रतिभासमानयोः प्रतिभासमानयोर्वेति विकल्प्याद्यं दूषयति—**स यदीति**॥ सुषुप्त्यादावपि प्रवृत्तिप्रसङ्ग इत्यर्थः।

द्वितीयपक्षेऽपि प्रतिभासमानयोश्च किमन्योन्याभावो भेदः किं वा स्वरूपं तत्र प्रथमं तृतीयपक्षान्तर्गतत्वेनोपेक्ष्य द्वितीयपक्षे दूषणमाह—**प्रतिभासमानयोरिति**॥ स्वप्रतिभासयोः स्वयं प्रकाशयोरिति यावत्। भेदकशब्देन भेदकारण-

स यदि प्रतिभास्ययोः स्वस्वभावभूतः कथं न प्रतिभासेत ? प्रतिभासयोरपि स्वप्रति-भासयोः स्वभावोऽसौ भासत एवेति न भेदाग्रहसंभवः । यदि भेदकाग्रहः भेदो-त्पादकश्चेत् भेदकः भेदस्य स्वरूपत्वात् कारणाग्रहणं कार्ये प्रवर्तयति कार्यान्तरार्थिन-मित्यापन्नम् । एवं चातिप्रसङ्गः । यदि भेदज्ञापकः, तथापि स्वरूपभेदज्ञापक-

प्रकाशयोः भेदोऽपि स्वरूपभूतः प्रकाशत एव । न ह्यस्ति संभवः तत्प्रकाशते तत्स्वरूपं च न प्रकाशतेऽविद्यादिप्रतिबन्धं विनेति भावः । ननु दूरस्थो वह्निः प्रतीयते न तत्स्वरूपमौष्ण्यमित्यस्यैवोदाहरणम् । न, तस्यापि स्वरूपत्वानभ्यु-पगमात्, तद्धर्मविशेषो ह्यौष्ण्यमिति स्थितिः । तदुक्तम् "यस्मिन् भाति योऽन्यो न भाति नासौ ततो भिन्नो भावो घटादिव मेरुरिति ।" यदि भेदका-ग्रहस्तत्रापि वक्तव्यम् किं भेदोत्पादको भेदकः, किं वा भेदज्ञापक इति । प्रथमं पराकरोति—**भेदोत्पादकश्चेदिति ॥** भेदस्य प्राभाकरमते वस्तुस्वरूप-त्वात् वस्तूत्पादकाग्रहणमन्यार्थिनोऽन्यत्र प्रवर्तकमित्यायातम् । तदा कुलालाद्यग्रहणात् कुम्भार्थिनः स्तम्भे प्रवृत्तिरित्यतिप्रसङ्गः स्यादित्यर्थः । द्वितीयमनुवदति—**यदि भेदज्ञापक इति ॥** तथापि वक्तव्यं किं भेदज्ञापकश्चक्षुरादिः उत भेद्यगतो धर्म इति । प्रथमं दूषयति **स्वरूपेति ॥** शुक्तिरूप्ययोः स्वरूपभूतभेदज्ञापक-चक्षुराद्यग्रहणात् रजतार्थिनः शुक्तिशकले प्रवृत्तिरिति अतिप्रसङ्ग एव दोषः । कुम्भार्थिनोऽपि चक्षुराद्यग्रहणात् स्तम्भे प्रवृत्तिप्रसङ्गादित्यर्थः । द्वितीयमनुभाषते—

---

मुत भेदज्ञानकारणं इति विकल्प्याद्यं दूषयति—**भेदोत्पादकेति ॥** तत्र फलितं विकल्पार्थं दर्शयति - **भेदस्येति ॥** प्रतिभासमानयोश्शुक्तिरजतयोः यत्कारणं तस्या-ग्रहणं कार्ये शुक्तौ कार्यार्थिनं रजतार्थिनं प्रवर्तयतीत्यर्थः । ततः किमित्यत आह— **एवं चेति ॥** शुक्तिरजतयोः प्रतिभाससमये प्रतिभासमानभूतलालोकादिकारणस्या-दृष्टेश्वरादेरग्रहणात्तत्रापि रजतार्थिप्रवृत्तिः स्यादित्यर्थः । भेदज्ञानहेतुः इति द्वितीय पक्षं दूषयति—**यदि भेदज्ञापक इति ॥** भेद्यनिष्ठत्वे सति भेदज्ञापको भेदक इति विशेषमाशङ्कते —**अथेति** । स भेदक इति यावत् ।

भेदाधिष्ठानधर्माणां ज्ञानानां भेदज्ञापकत्वमुताज्ञातानामिति विकल्प्याद्यं दूषयति—**यदीति** । ज्ञातानामेव भेदज्ञापकत्वाङ्गीकारे स्वरूपभूतभेदज्ञाने च तेषामपि ज्ञानस्यावश्यंभावितया तदग्रहो न संभवतीति भावः ।

चक्षुराद्यग्रहात् प्रवृत्तिरिति स एव दोषः । अथ भेदज्ञापको भेद्यधर्मो विवक्षितः, यदि भेद्याविदमंशरजतांशौ तद्धर्मा यदि न ज्ञाताः तत्स्वभावभेदं ज्ञापयन्ति; तत्स्वभावभेदज्ञानात् तेऽपि ज्ञाता एवेति कथं तदग्रहः ? यद्यज्ञातास्ते नयनसंयोगादय एवेति तदग्रहः स्यादपि प्रसङ्गी । अप्रतिभासमानयोरप्यंशयोः भेदकाग्रहणं तादृगेव । असाधारणधर्मग्रह एव विवक्षित इति चेत् , सोऽपि नाप्रतिभासमानांशयो-

---

**अथ भेद इति** ॥ तत्रापि किं भेद्याविदमंशरजतांशौ प्रतिभासमानौ किंवाऽप्रतिभासमानौ केनचिदंशेनापीति वाच्यम् । प्रथममनुवदति—**यदि भेद्याविदमंशरजतांशाविति** ॥ तत्रापि वाच्यं किं तद्धर्मा ज्ञातास्सन्तस्तत्स्वभावभेदं ज्ञापयन्ति, उत अज्ञाता इति । प्रथमं पराकरोति—**तद्धर्मा यदीति** ॥ यदि धर्मा न ज्ञातास्तदा भेदोऽपि न ज्ञायेत आलोकाभाव इव रूपं ज्ञाताश्चेदिदमंशरजतांशयोः स्वभावतो भेद इति । तदन्यथानुपपत्त्या धर्मा अपि ज्ञाता एवेत्यवगच्छामः । तस्मात् तदग्रहात् न प्रवृत्तिरित्यभिसन्धिः । द्वितीयं दूषयति—**यद्यज्ञाता इति** ॥ ज्ञातयोरिदमंशरजतांशयोः भेदज्ञापकाः अज्ञाता धर्माश्चक्षुस्संयोगादय एव नान्ये संभाव्यन्ते तदग्रहाच्चेदन्यार्थिनोऽन्यत्र प्रवृत्तिः तदातिप्रसङ्ग एवेत्यर्थः । प्रथमविकल्पं द्विधा विकल्प्य दूषणमभिधायेदानीं द्वितीयं दूषयति—**अप्रतिभासमानयोरपीति** ॥ अप्रतिभासमानयोः अंशयोर्भेदकधर्माग्रहणमन्यार्थिनोऽन्यत्र प्रवृत्तिनिमित्तं चेत्तदाप्यतिप्रसङ्ग एवेत्यर्थः । भेदकाग्रहो नाम भेदोत्पादकाग्रहः भेदज्ञापकाग्रहो वेत्यकाण्डे विकल्पताण्डवं अमण्डनं पण्डितानाम् । किन्त्वसाधारणधर्माग्रहणं विवक्षितमिति चेदभिधीयते, तत्र वक्तव्यं सोऽपि किमप्रतिभासमानांशयोः प्रतिभासमानांशयोर्वा ? नाद्योऽनवद्य इत्याह—**सोऽपीति** ॥ अतिप्रसङ्गभङ्गा-

---

अज्ञाता इति द्वितीयपक्षं दूषयति—**यद्यज्ञाता इति** ॥ भेद्यनिष्ठत्वे सति अज्ञायमानतया भेदप्रतीतिहेतवो नयनसंयोगादय एव परिशिष्यन्ते, अदृष्टेश्वरादीनां भेदज्ञापकत्वे सति भेद्यनिष्ठत्वाभावात्तथा च प्रतिभासमानघटादिसन्निकर्षस्याग्रहणात् रजतार्थिनस्तत्रापि प्रवृत्तिः स्यादित्यर्थः । आदिशब्देन उष्णं जलं तिक्तो गुड इत्यादिभ्रमस्थलेषु इन्द्रियान्तरसन्निकर्षाः कथ्यन्ते तादृगेव प्रसञ्जकमेवेति यावत् । भेदकाग्रहशब्देनासाधारणधर्माग्रहो विवक्षित इति शङ्कते —**असाधारणेति** ॥ अप्रतिभासमानयोरसाधारणाग्रहः प्रवृत्तिहेतुः किंवा प्रतिभासमानयोरिति विकल्प्याद्यं दूषयति—**सोऽपीति** ॥ उक्तदोषादतिप्रसङ्गादित्यर्थः ।

रुक्तदोषात् । प्रतिभासमानांशयोस्तु कतिपयासाधारणधर्माग्रहणं चेत् कुम्भादावपि स्तम्भार्थिनः प्रवृत्तिः स्यात्, प्रातिस्विकनयनसंयोगाद्यग्रहणात् । प्रातिस्विकाकार भेदेऽपि संयोगाद्यात्मना साधारण्ये सर्वासाधारणधर्मेष्वपि केनचिदात्मना तथाभावः स्यात् । कस्यचिदप्यग्रहणं तु असाधारणधर्मस्य प्रकृतेऽप्यसिद्धम् । रजते रजतत्वस्य पुरोवर्तिनि च देशभेदसंयोगादेरसाधारणधर्मस्य स्फुरणात् । अथ पुरोवर्तिनो यः सामान्यविशेषो रजतासम्भवी शुक्तित्वादिः तस्याग्रहणं विवक्षितमिति, एवमपि

दित्यर्थः । द्वितीयविकल्पेऽपि किं कतिपयासाधारणधर्माग्रहणमन्यार्थिनोऽन्यत्र प्रवृत्तिनिमित्तं किं वा सर्वासाधारणधर्माग्रहणमिति विकल्प्य प्रथममनूद्य दूषयति — **प्रतिभासमानांशयोस्त्वित्यादिना** ॥ ननु प्रातिस्विकनयनसंयोगादीनां संयोगाद्यात्मना साधारण्यात् साधारणधर्मत्वमेव नास्तीत्याशङ्क्याह — **प्रातिस्विकाकारभेदेऽपीति** ॥ प्रतिस्वं प्रतिपदार्थं नयनसंयोगादीनां आकारभेदे विद्यमानेऽपि यदि संयोगादिरूपेण साधारण्यमभिधीयते तदा सर्वेषामसाधारणधर्माणां धर्मत्वादिरूपेण साधारणधर्मत्वमेव स्यादित्यर्थः । तस्मात् कतिपयासाधारणधर्माग्रहणाच्चेदयथाव्यवहारः, तदा नयनसंयोगाद्यग्रहणात् कुम्भार्थिनः स्तम्भेऽपि प्रवृत्तिः स्यात् इति । अथ सर्वासाधारणाग्रहणमन्यार्थिनोऽन्यत्र प्रवृत्तिनिमित्तं इति, तत्राह — **कस्यचिदपीति** ॥ असाधारणधर्माग्रहणे विकल्पावसर एव नास्तीत्यभिप्रेत्याह — **अथ पुरोवर्तिन इति** । स्वव्यक्तिषु अनुवृत्तप्रत्ययकारणत्वात् सामान्यं व्यक्त्यन्तरेभ्यो व्यावृत्तप्रत्ययकारणत्वाच्च विशेषोऽप्युच्यते शुक्तित्वादिरेव, तस्याग्रहणमसाधारणधर्माग्रहणं चेदन्यार्थिनोऽन्यत्र प्रवृत्तिनिमित्तमित्यर्थः । परिहरति —

---

द्वितीयपक्षेऽपि कतिपयासाधारणधर्माग्रहणं सर्वासाधारणधर्माग्रहणं वेति विकल्प्याद्ये दोषमाह—**प्रतिभासमानांशयोरिति** ॥ तत्र हेतुः—**प्रातिस्विकेति** ॥ घटसंयोगस्य पटसंयोगिरूपेणासाधारण्येऽपि संयोगित्वरूपेणसाधारण्यान्नास्त्यसाधारण्यमित्याह — **प्रातिस्विकाकारेति** ॥ रूपरसादीनां प्रातिस्विकशुक्लमधुरादिरूपेणासाधारण्येऽपि रूपत्वरसत्वादिनाऽसाधारण्याभावादसाधारणत्वं न स्यादित्यर्थः । सर्वासाधारणधर्माग्रहणमिति विकल्पं दूषयति — **कस्यचिदिति** ॥ असिद्धत्वमेवाह — **रजत इति** ॥ रजतावृत्तित्वे सति पुरोवर्तिनिष्ठस्य शुक्तित्वादेरपरजातिविशेषस्याग्रहणाद्भेदकाग्रहणमिति शङ्कते—**अथेति** । दूषयति—**एवमपीति** ॥

**पुरोवर्तिनि पाषाणत्वाद्यग्रहणात् रजतस्मरणाच्च पाषाणे प्रवृत्त्यापातः । न च** सादृश्यसहकृतस्य विशेषाग्रहस्य प्रवर्तकता, विसदृशपीतशङ्खादिभ्रमे व्यभिचारात् । संस्कारोद्बोधद्वारेण तु रजतस्मरणे तदुपयोगि । तच्चेत् कथंचिदन्यतो जातम्, न सादृश्यस्य प्रवृत्त्युपयोगः । यादृग्धर्मग्रहणान्निवृत्तिः, तदग्रहणात् प्रवृत्तिरित्यप्य-

**एवमपीति** ॥ पुरोवर्तिनि सामान्यविशेषाग्रहणं चेदन्यार्थिनोऽन्यत्र प्रवृत्तिनिमित्तं तर्हि किमिति रजतार्थी शुक्तिकाशकले एव प्रवर्तेत इत्यर्थः । ननु न सामान्य-विशेषाग्रहमात्रस्यायथाव्यवहारहेतुत्वं किन्तु सादृश्यसध्रीचीनस्येत्याशङ्क्याह—**न चेति** ॥ सादृश्यं न भ्रमकारणं भ्रमेष्वनन्वयात्, स्मृत्युपमानयोश्च भ्रान्तित्वप्रसङ्गा-दिति भावः । क्व तर्हि सादृश्यस्योपयोग इत्याशङ्क्याह—**संस्कार इति** ॥ ननु तर्हि शुक्तिरूप्ययोरपि चाकचक्यादिसादृश्यं पूर्वरजतानुभवसंस्काराभिव्यक्ति-द्वारेण रजतस्मरणमुत्पादयत् प्रवृत्तिकारणं भविष्यतीत्याशङ्क्याह—**एतच्चेत्कथंचि-दिति** ॥ स्मरणोत्पादकेऽपि न सादृश्यन्नियतं "सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः" इत्युक्तत्वादित्यर्थः । तस्मात् सादृश्यस्य भ्रमाकारणत्वात् पुरोवर्तिनः सामान्यविशेषाग्रहणं चेदयथाव्यवहारकारणं तदा पाषाणेऽपि प्रवृत्त्यापात इति भद्रतरमभ्यधायि । ननु तर्हि निवर्तकधर्माग्रहणमेव असाधारणधर्माग्रहणं अस्तु तदयथाव्यवहारस्य कारणमित्याशङ्क्याह—**यादृगिति** ॥ ननु नेदं रजतमित्याप्त-वचनजनिताद्रजताभावज्ञानादसत्यपि विशेषग्रहे निवर्तनं नाम परोक्षबाधे ; प्रत्यक्षबाधे

पुरोवर्तिनि पाषाणे सामान्येन दृश्यमाने सादृश्यसहकृतस्यैव जातिविशेषा-ग्रहस्य प्रवर्तकत्वान्नातिप्रसङ्ग इत्यत आह—**न च सादृश्येति** ॥ पीतशंखादिविभ्र-मेषु सादृश्यविशेषितस्य विशेषाग्रहस्याभावादित्यर्थः । माभूद्विसदृशभ्रमेषु सादृश्य-विशेषितविशेषाग्रहस्य प्रवर्तकत्वं यत्र तु सादृश्यमस्ति तत्र विशेषितग्रहस्य प्रवर्तक-त्वमित्याशङ्क्य तत्रापि स्मरणजनकसंस्कारोद्बोधकत्वेनान्यथासिद्धत्वान्न प्रवर्तकत्व-मित्याह— **संस्कारोद्बोधेति** ॥ उद्बोधकत्वमपि नियतं न भवतीत्याह—**तच्चेति** ॥ अन्यतोऽदृष्टादेरिति यावत् । विशेषमाशङ्कते—**यादृगिति** ॥ विभ्रमादिनापि कस्यचिद्विशेषस्याग्रहणान्निवृत्तिरास्थेया तथा सति ग्रहणमेव प्रवृत्तिहेतुर्न विशेष-ग्रहस्य निवर्तकत्वमित्यर्थः । भवतु शाब्दबोधज्ञानान्निवृत्तिः प्रात्यक्षिकबाधज्ञाने तु विशेषग्रहादेव निवृत्तिरित्यत आह—**तथेति** ॥ ननु शुक्तित्वग्रहोऽपि तत्रास्तीत्यत

युक्तम् । न खलु कस्यचिद्धर्मस्य ग्रहणात् निवृत्तिः ; अपि तु आप्तवाक्यजनितादपि रजताभावज्ञानादसत्यपि विशेषग्रहे निवर्तते । तथा प्रत्यक्षबाधेऽपि रजतप्रतिषेध एव निवर्तकः, तस्याव्यभिचारात् । अस्तु तर्हि 'नेदं रजतम्' इति परस्पराभावाग्रहणमेव प्रवर्तकम् ; मैवम् ; स्मर्यमाणे रजते पुरोवर्तिनि तावन्मात्रावस्थोपलम्भस्यैवाभावोपलम्भत्वात् । स च प्रागेव जात इति कथमभावाग्रहणम् ? तथापि नञुल्लेखेन न जात इति चेत्, न, नञुल्लेखस्याप्रयोजकत्वात् । अन्यथा "कुम्भोऽयम्" "स्तम्भोऽयम्" इत्यादि जानतः परस्परव्यावृत्तरूपप्रतिभासे

पुनः पुरोवर्तिनो विशेषग्रहणादेव निवृत्तिरित्याशङ्क्याह —**तथा प्रत्यक्षबाधेऽपीति** ॥ रजताभावज्ञानस्य सर्वत्र परोक्षबाधे प्रत्यक्षबाधे चाव्यभिचारात् प्रत्यक्षबाधेऽपि तदेव निवर्तकम् । विद्यमानमपि विशेषग्रहणमजागलावलम्बिस्तनयुगलवत् निष्फलमित्यर्थः । तस्मान्निवर्तकधर्माग्रहणमप्यसाधारणधर्माग्रहणं न भवतीति न भेदकाग्रहणं प्रवर्तकमिति स्थितम् । इदानीं तृतीयविकल्पमुद्भावयति—**अस्तु तर्हीति** ॥ परिहरति—**मैवमिति** ॥ रजते स्मर्यमाणे सति पुरोवर्तिनीदमिति पुरोवर्तिमात्रावस्थोपलम्भस्यैवाभावोपलम्भत्वात् भावातिरेकिणोऽभावस्य प्रभाकरेणानङ्गीकरणात । स चोपलम्भः प्रथमत एव संवृत्त इति नाभावग्रहणमयथाप्रवृत्तिनिमित्तमित्यर्थः ॥ तथापि इत्यादिः स्पष्टार्थः । ननु स्तम्भोऽयं कुम्भोऽयं इत्यवगच्छतो नायथाव्यवहारावतारः । नञुल्लेखकारणाभावेपि विशेषाग्रहणस्यैवायथाव्यवहारकारणत्वादित्याशङ्क्याह —**न च**

---

आह—**तस्याव्यभिचारादिति** ॥ शाब्दबोधज्ञाने विशेषग्रहणस्य व्यभिचारादव्यभिचरितस्याभावज्ञानस्यैव निवृत्तिप्रयोजकत्वमित्यर्थः । एतच्च परमताङ्गीकारेणोक्तम् । स्वमते अधिष्ठानयाथार्थ्यज्ञानस्य विभ्रमविरोधित्वाङ्गीकारादिति द्रष्टव्यम् । अन्योन्याभावाग्रहो भेदाग्रह इति तृतीयमुत्थापयति—**अस्त्विति** । निराकरोति—**मैवमिति** ॥

प्राभाकरमते हि स्मर्यमाणे प्रतियोगिनि अधिष्ठानमात्रोपलम्भस्यैवान्योन्याभावग्रहता । अत्र च स्मर्यमाणे रजते पुरोदेशस्थस्योपलम्भादन्योन्याभावग्रहणादतिरिक्तस्याभावस्यानङ्गीकारान्न परस्पराभावाग्रहणमित्यर्थः । स्वरूपेण परस्पराभावग्रहणेऽपि नञुल्लेखानुल्लेखाभ्यां विशेष इति शङ्कते—**तथापीति** ॥ परिहरति—**नेति** ॥ अप्रयोजकत्वमेव दर्शयति—**अन्यथेति** ॥ **उक्तमिति** ॥ कतिपयविशेष-

नास्ति नञुल्लेख इत्ययथाव्यवहारापातः । न च विशेषाग्रहणं प्रवर्तकमित्युक्तम् ; अथापि' नेदं रजतम्' इत्येवमाकारः प्रत्ययः प्राङ् नासीत्, भवति च पश्चात् इति प्रवृत्तिनिवृत्तिव्यवस्थेति चेदभिधीयेत, तत्रापि वक्तव्यम्—'इदं रजतम्' 'नेदं रजतम्' इत्यनयोरस्ति कश्चिद्विषयभेदः यतः प्रवृत्त्यप्रवृत्ती, किंवा नञ एवोल्लेखानुल्लेखवैषम्यम् । यद्याद्यः कल्पः, कस्तर्हि पूर्वस्मादुत्तरस्य तादृग्विलक्षणो विषयभेदः । शुक्तित्वादिरसाधारणो धर्म इति चेन्न, तस्यानञर्थत्वात् । अन्यथा

---

**विशेषाग्रहणमिति** ॥ विशेषाग्रहणमन्यार्थिनोऽन्यत्र प्रवर्तकं न भवतीत्युक्तम्, येन स्तम्भोऽयं कुम्भोऽयमिति विशेषग्रहणसद्भावात् नञुल्लेखाभावेऽप्ययथाव्यवहारो न स्यादित्यभिधीयते । तस्मादिदं रजतमित्यत्र यदि नञुल्लेखाभावापराधेनायथा-व्यवहारः स्यात् तदा स्तम्भादिष्वपि स्यादिति साध्वेवाभ्यधायि । यदभाणि पुरोवर्ति-तन्मात्रावस्थोपलम्भस्यैवाभावोपलम्भत्वात्तस्य च प्रागेव भावात् नाभावाग्रहणं प्रवर्तकमिति, तद्विघटयति—**अथापि नेदमिति** ॥ पुरोवर्तितन्मात्रावस्थोपलम्भो दैवगत्या यद्यपि अभावोपलम्भो भवति, तथापीति योजना । **तत्रापि**—इत्यादिः स्पष्टार्थः । पूर्वज्ञानावगतेदमंशरजतांशातिरिक्तस्य तयोः परस्पराभावस्य प्रभाकरेणा-नङ्गीकारात् उत्तरज्ञानस्य पूर्वज्ञानाविषयः विलक्षणो विषयो नास्तीत्यभिप्रेत्याह— **कस्तर्हीति** ॥ उत्तरज्ञानस्य पूर्वज्ञानविषयविलक्षणविषयं शङ्कते—**शुक्तित्वादि-रिति** ॥ परिहरति—**न तस्येति** ॥ अभाव एव हि नञः श्रौतोऽर्थ इति

---

ग्रहणं सर्वविशेषाग्रहणं च प्रवर्तकं न भवतीत्युक्तमित्यर्थः । नञुल्लेखस्य परस्परा-भावग्रहणं प्रत्यप्रयोजकत्वे तदनुल्लेखितोल्लेखितत्वविशेषितप्रत्ययाभ्यामेव प्रवृत्ति-व्यवस्थेति शङ्कते—**अथापीति** ॥ यत्प्रत्ययनिबन्धने प्रवृत्तिनिवृत्ती स्यातां तयोः विशेषः कश्चिदस्ति । नञुल्लेखितत्वानुल्लेखितत्वमेव विशेष इति—**तत्रापीति** ॥ शुक्तित्वादिरसाधारणो धर्म एवोत्तरज्ञानस्य विशेष इत्याशंक्य परिहरति— **शुक्तित्वादिरिति** ॥ पर्युदासवृत्त्या शुक्तित्वादिरपि नञर्थ इत्यत आह— **अन्यथेति** ॥ शुक्तित्वप्रतिभासेन प्रत्यक्षबाधकज्ञाने नञस्तदर्थत्वकल्पनायामपि शाब्दानुमानबाधकज्ञाने शुक्तित्वाप्रतिभासेन नञस्तदर्थत्वानुपपत्तौ बाधकत्वाभाव-प्रसङ्गात् । न च तत्रापि वाक्यस्य तत्परत्वं, तथासति नञः पर्युदासपरत्वेना-भावपरत्वाभावे "न तौ पशौ करोति" "नेक्षेते"त्यादेरविशेषप्रसङ्गादित्यर्थः । तस्मादसदुक्त एव ज्ञानयोर्विषयविशेषोऽङ्गीकर्तव्यः इत्युपसंहरति— **तस्मादिति** ।

तदप्रतिभासे 'नेदं रजतम्' इत्याप्तवचनजा धीर्न स्यात्। तस्मात् 'इदं रजतम्' इति पूर्वं तादात्म्यप्रतिभासः; पश्चात् 'नेदं रजतम्' इति तदभावप्रतिभासः इत्येव युक्तो विषयभेदः इति। अन्यथा इदमंशरजतांशस्वरूपमात्रानतिरेकी परस्पराभावो भवतां तयोरिति न तस्याप्रतिभासप्रतिभासकृतः प्रागुत्तरप्रत्ययभेदः। तथा च 'नेदं रजतम्' इति विलक्षणविषयप्रतीत्यनुदयात् प्रवृत्ताववश्याश्रयणीयो विपर्यासः नञ एवोल्लेखानुल्लेखवैषम्यं त्वत्प्रयोजकमुक्तं पुरस्तात्। न च प्रति-

अन्यत्र निरधारीति नेह निर्धार्यते संग्रहाधिकारात्। शुक्तित्वादिश्चेत्तदर्थः स्यात् तदा तस्यानवगमेनेदं रजतमित्याप्तवाक्यात् बुद्धिर्नोदीयादित्याह—**अन्यथेति**॥ ननु त्वत्पक्षे वा पराचीनज्ञानस्य कः पूर्वविलक्षणो विषय इत्याशङ्क्याह—**तस्मादिति**॥ अन्यथाख्यातिमतावलम्बनेनायं विषयविभागोऽभिहित इति व्याख्येयम्। पराचीनज्ञानस्य तादात्म्याभावविषयत्वानङ्गीकारे प्रागुत्तरप्रत्ययभेद एव न सिध्यतीत्याह—**अन्यथेति**॥ ननु भवतु पराचीनज्ञानस्य तादात्म्याभावो विषयः; तथापि पूर्वं तादात्म्यावभास इति कुतोऽवसीयते इत्याशङ्क्याह—**तथा चेति**॥ यदा पराचीनज्ञानस्य तादात्म्याभावविषयत्वं सिद्धं तदा तस्य प्रसक्तप्रतिषेधरूपस्य तादात्म्यप्रसक्त्यभावे समुदयानुपपत्तेरवश्यं तादात्म्यावभासोऽभ्युपगन्तव्यः इत्यर्थः। तस्मादख्यातिवादिना पूर्वोत्तरज्ञानयोः विषयभेदो वक्तुं न पार्यत इति स्थितम्। द्वितीयं विकल्पमिदानीं दूषयति—**नञ एवेति**॥ ननु पूर्वोत्तरप्रत्यययोः नञुल्लेखवैषम्यमात्रं वयमपि न ब्रूमः; किन्तु प्रतियोगिनि रजते स्मर्यमाणेऽपि पुरोवर्तितन्मात्रावस्थोपलम्भे सति न पूर्वत्रेति व्याहारव्यवहारप्रतिभासा भवन्ति, रजतस्य दर्शनयोग्यत्वाभावात् योग्यता हि विषयातिरिक्ताग्रहणसामग्री। तत्र शुक्तिकाविशेष-

---

परस्पराभावभावानामस्तु विपर्यविशेष इत्याशंक्याह—**अन्यथेति**॥ फलितमाह—**तथा चेति**॥ विपर्यासस्तादात्म्यविषयः नञुल्लेखानुल्लेखपक्षमुक्तदोषेण निराकरोति—**नञुल्लेख एवेति**॥ दृश्ये प्रतियोगिनि तन्मात्रोपलम्भात्तदभावव्यवहारः उत्तरकालमेव प्रतियोगिदृश्यत्वान्न पूर्वं तत्सम्भव इत्याशंक्य परिहरति—**न चेति**॥ व्याहारश्शब्दप्रयोगः व्यवहारः कायचेष्टादिः। कुतो न वाच्यमित्यत आह—**यादृगिति**॥ अत्र शुक्तीदमंशे रजतभ्रमस्तत्रैव तत्समीपवर्तिनि सत्यरजते रजतत्वमुपलभ्यते. रजतस्य द्रष्टुमयोग्यत्वे न भवेत्। भवति च। तस्मादविपर्यस्तरजतदृश्य-

गेरजतस्मरणेऽपि तस्य दृश्यत्वाभावान्न प्राङ् नेति व्याहारव्यवहारप्रतिभासाः।
वर्तितन्मात्रावस्थोपलम्भेऽपि। पश्चात्तद्दृश्यतया तथा भविष्यतीति वाच्यम्;
दृक्प्रदेशनिवेशिनि रजते तथाविधकरणस्यैव पुंसो रजतत्वोपलम्भात्। अपर-
परस्परसन्निहितयोः रजतशुक्तिकयोः रजते रजतव्यवहारो न स्यात्।

यदि चायमसंसर्गाद्व्यवहारः। स यदि इदमिति रजतमिति च प्रति-
भासमानांशयोः अतादात्म्यस्य वा असमवायस्य वाऽग्रहः, तर्हि संसर्गाभावापरपर्या

---

फुरणमपि भूतले घटाभावग्रहे भूतलज्ञानमिव सामग्री, पूर्वं तदभावादयोग्यत्वं,
दानीं दर्शनयोग्यस्य हि अनुपलब्ध्याऽभावो ज्ञायतेऽभाववादिभिः। पश्चात्तु रजतस्य
दर्शनयोग्यस्यादर्शनान्नेति व्याहारादयो भविष्यन्तीति व्यवस्था पूर्वोत्तरप्रत्ययसौरि-
याशङ्क्याह—**न चेति**॥ पूर्वं रजतस्य दर्शनयोग्यता नास्ति, पश्चात्तु भविष्य-
तीत्यत्र कोशपानमेव शरणम्। वयं तु प्रतीमः—पूर्वमपि योग्यतास्तीति हट्टादौ
पुरोदेशनिवेशिनि रजते प्रथमत एवालोकादिसहकृतनयनस्य पुंसो रजतोपलम्भस्य
विद्यमानत्वादित्यर्थः। अथ वा शुक्तिदेशनिवेशिनि सम्यग्रजते कामलादिदोष-
दूषितलोचनस्यापि पुंसः प्रथमत एव रजते रजतत्वोपलम्भसंभवादित्यर्थः। यदि
शुक्तीदमंशसन्निकृष्टत्वात् चक्षुषो न रजतत्वोपलम्भयोग्यतेत्याशयः तत्राह—
**अपरथेति**॥ तस्माद्रजतस्य दर्शनयोग्यत्वायोग्यत्वकृतोऽपि न प्रागुत्तरप्रत्ययभेद
इति स्थितम्। इदानीं क्रमप्राप्तं चतुर्थविकल्पमनुवदति—**यदि चेति**॥ तत्रापि
च वक्तव्यम् - स किमसंसर्गाग्रहः प्रतिभासमानांशयोरतादात्म्यासमवाययोरग्रहः
किं वा प्रतिभासमानांशयोरिति। प्रथमं पराकरोति – **स यदीति**॥ **अप्रति-**

---

तया आरोप्यरजतस्यादृश्यत्वमस्तीत्यर्थः। तथाविधकरणस्य-यादृशकरणवतो भ्रम-
स्तादृशकरणस्येति यावत्। सम्यग्रजतस्य दृश्यत्वाभावे दोषमाह—**अपरथेति**।
शुक्तीदमंशे सम्यग्रजते च रजतव्यवहारो न स्यात्। अयोग्यत्वस्योभयत्रापि तुल्यत्वा-
दित्यर्थः। शुक्तिग्रहणं तु कोष्ठगत्या। नच सन्निहितस्य नयनादिसन्निकर्षादस्ति
योग्यता देशान्तरस्थस्य तु तदभावे नास्ति योग्यतेति वाच्यम्—बाधकज्ञानसमयेऽपि
व्यवहितसन्निकर्षाभावस्यानिष्टत्वात्, नच नञुल्लेख एव दर्शनयोग्यता, समीपवर्तिनि
तदभावेऽपि दृश्यत्वाङ्गीकारात्। नच स्मर्यमाणेऽपि सा योग्यता, रजतपदाद्रजत-
स्मरणे तदभावेऽपि स्मरणस्य विवेचकत्वाङ्गीकारादित्यर्थः। असंसर्गाग्रहमुत्थाप-
यति—**यदि चेति**॥

सोऽपि किं प्रतिभासमानयोरुताप्रतिभासमानयोरिति विकल्प्याद्येऽप्यसंसर्ग-

यस्यासंसर्गस्य संसर्गिमात्रानतिरेकात् , अतिरेके वाऽपराद्धान्तापातात् इदमिति रजत-मिति च संसर्गिमात्रग्रहे कथं तदभिन्नासंसर्गाग्रहात् व्यवहारः ? अप्रतिभासमानांशयोस्त्वसौ अतिप्रसङ्गी । तदेव न विवेकाग्रहादयथाव्यवहारः । साक्षात्पारम्पर्य-विकल्पानुपपत्तेश्च । न तावद्विवेकाग्रहः साक्षाद्व्यवहारमुपजनयेत् । रजतेच्छा-निबन्धनो हि तदर्थिनः प्रयत्नः ; तन्निबन्धनश्च शरीरपरिस्पन्दः । नापि परम्परया विपर्ययानुत्पादेन । नहि पुरोवर्तिनि रजतत्वाग्रहे समीहितसाधनतानुमानद्वारे-णेच्छा ? रजतत्वस्यापक्षधर्मत्वात् । अथेच्छागोचररजतांशाविवेकसारूप्यात् प्रवृत्तिः

---

**भासमानयोः**—इत्यादिः स्पष्टार्थः । विपर्ययोत्पादानङ्गीकारे विवेकाग्रह इच्छो-त्पादादिपरम्परयापि प्रवर्तको न भवतीत्युक्तम् , तत्र हेतुमाह —**न हि पुरो-वर्तिनीति** ॥ पुरोवर्तिनि रजतत्वं चेद्गृह्यते तदा ममेदं समीहितसाधनम् , रजतत्वात् , संप्रतिपन्नरजतवत् इत्यनुमाय प्रवृत्तिर्घटते । यदा तु पुरोवर्तिनि रजतत्वं न गृह्यते तदा रजतत्वादित्यस्य हेतोः पक्षे वृत्त्यभावात् कुतोऽनुमानम् ? कुतस्तरां समीहितसाधनतावसायादिच्छाप्रसवः कुतस्तमां परम्परया विवेकाग्रहो रजतरागान्धधियः प्रवृत्तिमादध्यादिति भावः । साक्षात्पारम्पर्यविकल्पानुपपत्तेश्चे-त्यसिद्धं मन्वानस्याभिनवाख्यातिमतोपजीविनो मतमुत्थापयति- -**अथेच्छागोचरे-त्यादिना** ॥ इच्छागोचररजतांशाविवेकेन सारूप्यं विद्यते यस्य भ्रान्तिगतस्या-

---

शब्देन संसर्गिमात्रं वा संसर्गाभावो वाभिधीयेतेति विकल्प्योभयं दूषयति—**स यदीति** ॥ **तादात्म्यमिति** भाट्टमतानुसारिणः, समवाय इति नैयायिकाः ।

अस्तु संसर्गिमात्रत्वमससर्गस्य तथाप्युपलम्भः कथमित्यत आह—**इदमिति** ॥ संसर्गिणोरुपलम्भादेव तदुपलम्भोऽपि सिद्ध इत्यर्थः । अप्रतिभासमानयोरिति द्वितीयं पक्षं दूषयति —**अप्रतिभासमानांशयोरिति** ॥ पक्षचतुष्टयमुपसंहरति—**तदेव मिति** ॥ एवं तावद्विवेकाग्रहस्य स्वरूपतो दुर्निरूपत्वेन प्रवृत्तिहेतुत्वाभाव उक्तः ।

संप्रति स्वरूपमभ्युपगम्य तस्य प्रवृत्तिहेतुत्वं नास्तीत्याह — **साक्षादिति** ॥ साक्षात्पक्षं प्रथमतो दूषयति—**न तावदिति** ॥ इच्छाप्रयत्नाभ्यां कायपरिस्पन्दरूपायाः प्रवृत्तेर्व्यवहितत्वान्न विवेकाग्रहस्य साक्षात्प्रवृत्तिहेतुत्वमित्यर्थः । ज्ञायमानयोर्विवेकाग्र-हस्य प्रवृत्तिहेतुत्वाभ्युपगमात् ज्ञानं सिद्धवत्कृत्येच्छाप्रयत्नयोरुपन्यासः । पारम्पर्यपक्षं दूषयति—**नापीति** ॥ पुरोवर्तिनि रजतत्वाग्रहे समीहितसाधनानुमानद्वारेणेच्छा न भवतीत्यन्वयः । तत्र हेतुः—**रजतत्वस्येति** ॥ अपक्षधर्ममेवाह—**विपर्ययेति** ॥

ाक्षादेव । न च निवर्तकसारूप्यादभेदाग्रहणात् निवृत्त्यापातोऽपि । न हि वर्तकेन निवर्तकेन वा सारूप्यमित्येव प्रवृत्तेः निवृत्तेर्वा हेतुः, किन्तु प्रवृत्तिहेतु-ारूप्यात् प्रवृत्तिः ; निवृत्तिरप्येवम् । सत्यरजते च प्रवर्तमानो रजतव्यक्त्यन्तरा-

---

वेकस्य स तथोक्तः । तस्मात् विवेकाग्रहात् प्रवृत्तिः साक्षादेव भवतीत्यर्थः । नु यः परमार्थस्थले प्रवर्तते स समीहागोचररजतांशस्य पुरोवर्तिनो विवेकाग्रहात् प्रवर्तते । तथाविध एव च विवेकाग्रहोऽस्ति भ्रान्तस्येति यदि प्रवृत्तिं वाञ्छसि तर्हि परमार्थस्थले निवर्तमानोऽभेदाग्रहान्निवर्तते । स चात्रास्तीति निवृत्तिरपि किं न स्यादित्याशङ्क्याह—**न च निवर्तक इति** ॥ तत्र हेतुमाह—**न हीति** ॥ प्रवर्तकेन विवेकाग्रहेण सादृश्यं विद्यते अभेदग्रहस्य परामिमतस्येत्येतावता भेदाग्रहः प्रवृत्तिहेतुर्न भवतीति निवर्तकेन भेदग्रहेण सादृश्यं विद्यतेऽभेदाग्रहस्येत्येतावता नाभेदाग्रहो निवर्तक इत्यर्थः । कस्मात्तर्हि प्रवृत्तिनिवृत्ती भवत इत्याशङ्क्याह—**किन्त्विति** ॥ प्रवृत्तिहेतुः विवेकाग्रहः परमार्थस्थले तेन सह स्वरूपसारूप्यं सालक्षण्यं साम्यं विद्यते यस्य विवेकाग्रहान्तरस्य तत्तथोक्तम् । तस्मात्प्रवृत्तिः भ्रान्तिस्थले न तु तत्सदृशादभेदग्रहादित्यर्थः । निवृत्तिरप्येवं निवृत्तिरूपहेतुरूप-सालक्षण्याद्भवति । तथा हि – निवृत्तिहेतुः परमार्थस्थले भेदग्रहः । तेन लक्षण-साम्यं विद्यते यस्य भेदग्रहान्तरस्य तस्मादेव निवृत्तिर्भवति, न तु तत्सदृशादभेदा-ग्रहादित्यर्थः । इममेव विभागं विवृणोति—**सत्यरजते चेत्यादिना** ॥ वणिग्वी-थ्यादिनिवेशिनि रजते प्रवर्तमानः समीहागोचररजतादभिन्नाकारां पुरोवर्तिनीं व्यक्तिमवगच्छति । रजतं च वाञ्छति जानाति च रजतत्वम् । तदनवगमे

शुक्तिशकले रजतत्वेन प्रतीते रजतजातीयत्वादिष्टसाधनत्वेनावगते तत्रेच्छा भवति । विपर्ययानभ्युपगमे रजतजातीयत्वहेतोरसिद्धत्वेनेष्टसाधनतानुमानाभावे न तत्रेच्छा संभवतीत्यर्थः । अविभ्रम इव विभ्रमेऽपीप्यमाणरजतेन पुरोवर्तिनो विवेकाग्रहादव्यव-धानेनैव प्रवृत्तिरिति शङ्कते—**अथेति** ॥ अभेदग्रहे विपरीतख्यातिप्रसङ्गान्निवर्तकग्रह-णस्थल इव विभ्रमस्थलेऽप्यभेदाग्रहणस्य निवर्तकसारूप्यस्य भावान्निवृत्तिप्रसङ्ग इत्यत आह—**नचेति** ॥ तर्हि कथमभ्युपगम्यत इत्यतः आह—**किन्त्विति** ॥ प्रसिद्ध-प्रवृत्तिहेतुसजातीयस्य च सामीप्यादव्यवहितपूर्वक्षणे भावान्न तु तत्सारूप्यादित्यर्थः । विपर्यये भेदाग्रहस्य प्रवृत्तिहेतुत्वकथनाय सत्यरजतज्ञाने तस्य प्रवृत्तिहेतुत्वमुपपाद-यति—**सत्यरजत इति** ॥ कोष्ठगतया रजतत्वजातिसमवायाद्रजतव्यक्त्यन्तरादविलक्ष-

**दविलक्षणाकारां पुरोवर्तिनीं रजतव्यक्तिमवगच्छति जानाति च रजतत्वम्; इच्छति च रजतम्। न च तयोरसंबन्धमान्तरालिकं च व्यक्त्यन्तरमवगच्छतीति तावन्मात्रादेव तत्र प्रवृत्तिः। तदत्राप्यस्ति प्रवृत्तिकारणम्; निवृत्तिकारण तु भेदग्रहो नास्तीति न निवृत्तिः। न च तत्र तादात्म्यबोधात् समीहागोचरेण रजतांशेन समवाय-बोधाद्वा समवायव्यापकलिङ्गबोधाद्वा प्रवृत्तिः, तादात्म्यस्याप्रामाणिकत्वात्; सम-**

---

इच्छाया एवानुपपत्तेः। न च तयोः पुरोवर्तिसमीहागोचरयोः असंबन्धं जानाति। तदवगमे प्रवृत्त्यसंभवात् आन्तरालिकं च व्यक्त्यन्तरं तयोः तादात्म्यलक्षणं नावगच्छति, तस्याकिञ्चित्करत्वादिति इत्येतावन्मात्रादेव विवेकाग्रहपर्यायासंसर्गाग्रहादेव तत्र परमार्थस्थले प्रवर्तते। तच्च प्रवृत्तिकारणमसंसर्गाग्रहलक्षणं भ्रान्तिस्थलेऽपि विद्यत इति प्रवृत्तिर्घटते। निवृत्तिकारणं तु परमार्थस्थले भेदग्रहः। सोऽत्र भ्रमकाले नास्तीति न निवृत्त्यापात इत्यर्थः। ननु परमार्थस्थले नासंसर्गाग्रहणमात्रात् प्रवृत्तिः किन्तु पुरोवर्तिनः समीहागोचरेण रजतांशेन सह तादात्म्यबोधात्प्रवर्तते। समवायबोधाद्वा समवायव्यापकलिङ्गदर्शनाद्वेत्याशङ्क्याह **न च तत्रेति**॥ क्रमेण हेतुमाह--**तादात्म्यस्येत्यादिना**॥ भिन्नयोः स्वरूपे स्थिते नष्टे वा नैक्यसंभवो रूप्यजातेश्च व्यक्तितादात्म्ये व्यक्तिमात्रं वस्तु स्यात्।

णाकारादिदमिति सामान्याकारेण पुरोवर्तिनीं व्यक्तिमवगच्छति, जानाति च रजतत्वमिच्छति च रजतं वस्तुज्ञानपूर्वकत्वादिच्छायाः। इच्छति जानाति चेति विपर्ययेण क्रमो द्रष्टव्यः।

तर्हि भेदाग्रहः कथमित्यत आह -- **न च तयोरिति**॥ समवायस्य विद्यमानत्वेन पुरोवर्तिरजतत्वजात्योरसंबन्धं नावगच्छतीत्यर्थः। तथापि नैरन्तर्येणव्यक्त्यस्फुरणे न प्रवृत्तिरित्यत आह--**आन्तरालिकमिति**॥ आन्तरालिकं च व्यक्त्यन्तरं पटादिकं नावगच्छतीत्यर्थः। मध्ये व्यक्त्यन्तरस्यास्फुरणे नैरन्तर्येण स्फुरणं सिद्धम्। तेन रजतत्वजातिव्यक्त्योर्नैरन्तर्येण स्फुरणे सत्यसम्बन्धाग्रहणादेव तत्र प्रवृत्तिरित्यर्थः। भवत्वेवं विपर्यये, सम्यग्ज्ञाने तु कथमित्यत्राह **तदत्रेति**॥ भेदग्रहस्यैव निवर्तकत्वादत्र च तस्याभावान्निवृत्तिप्रसङ्ग इत्याह-- **निवृत्तिकारणमिति**॥

नन्विष्यमाणरजतेन तादात्म्यबोधाद्रजतत्वसमवायाद्वा समवायव्यापकलिङ्गबोधाद्वा प्रवृत्तिः किं न स्यादित्यत आह --**न चेति**॥ समवायाप्रत्यक्षत्वमङ्गीकृत्य समवायव्यापकलिङ्गबोधादित्युक्तम्। प्रथमं पक्षं दूषयति--**तादात्म्येति**॥

वायस्य चाप्रत्यक्षत्वात्; प्रत्यक्षत्वस्य चक्षुषा प्रतिपन्नस्य संबन्धिविशेषणप्रतीति-जनकत्वस्य कल्पयितुमशक्यत्वाच्च समवायाप्रत्यक्षत्वसिद्धेः; समवायप्रतीतेश्च लिङ्गा-देवावधारितानौपाधिकसंबन्धात् संभवात्; लिङ्गस्य तु साधारण्येन क्लृप्तशक्तिकत्वात्;

---

व्यक्तेश्च जातितादात्म्ये जातिमात्रमिति तादात्म्यस्य निखिलप्रमाणविकलतया नभ-स्स्थलनलिनायमानत्वान्न तद्बोधात् प्रवृत्तिरित्यर्थः। समीहागोचररजतजातेः पुरो-वर्तिनि समवायबोधान्न प्रवर्तत इत्यत्र हेतुमाह—**समवायस्य चेति** ॥ ननु समवायस्याप्रत्यक्षत्वमसिद्धम्। इह घटे रूपसमवायो रूपसमवायवान् घट इति संयुक्तविशेषणविशेष्यभावेन तस्य प्रत्यक्षत्वात् इत्याशङ्क्याह—**प्रत्यक्षत्वस्य चेति** ॥ चक्षुः खलु संयुक्ते प्रतीतिमुत्पादयति। न च समवायस्य चक्षुषा संयोगोऽङ्गीकृतः स्वसंयुक्तद्रव्यविशेषणे च समवाये चक्षुषः प्रतीतिजनकत्वं क्वाप्यदृष्टं कल्पयितु-मशक्यम्। अतोऽप्रत्यक्षत्वस्य सिद्धिरित्यर्थः। ननु समवायप्रतीत्यनुपपत्तिः प्रत्यक्ष-त्वकल्पिका भविष्यति इत्याशङ्क्यान्यथाप्युपपत्तिमाह— **समवाय इति** ॥ समवाय-प्रतीतेश्च लिङ्गादेव संभवान्न प्रत्यक्षत्वप्रापकत्वमिति शेषः। अवधारितोऽनौपाधिकः स्वाभाविको वह्निधूमयोरिव संबन्धः लिङ्गिना सह यस्य तत्तथोक्तम्, तस्मादित्यर्थः। ननु समवायस्याप्रत्यक्षत्वे न तेन लिङ्गस्य संबन्धग्रहणं प्रत्यक्ष एवाग्न्यादौ लिङ्गस्य संबन्धग्रहणदर्शनादित्याशङ्क्याह — **लिङ्गस्य त्विति** ॥ रूपरूपिणोः भिन्नयोः नियमेन सहोपलब्धिः तयोः संबन्धपूर्विका, स च न समवायादन्य इति साधारण्येन गृहीतशक्तिकत्वात् शुक्लो घट इति रूपरूपिणोः नियतसहोपलम्भो हि समवायस्यापकं सामान्यतो दृष्टं लिङ्गं स्वभावविप्रकृष्टार्थानुमापकं सामान्यतो दृष्टमिति च तल्लक्षण-माहुः। रूपादिज्ञानमिव चक्षुरादेरिति भावः। ननु तर्हि इन्द्रियमपि संबन्धे

---

द्वितीयं दूषयति —**समवायस्येति** ॥ तदेव कथमित्यत आह—**प्रत्यक्षत्वस्येति** ॥ अप्रत्यक्षत्वसिद्धेरित्यन्वयः। तत्र हेतुः—**संबन्धीति** ॥ मूलसंबन्धरहिते संबन्धि-विशेषणे प्रतीतिजनकत्वस्यान्यत्रादृष्टचरस्य समवाये कल्पयितुमशक्यत्वादिति यावत्।

चक्षुस्संबन्धिविशेषणे प्रतीतिजनकत्वं मूलसंबन्धेन व्याप्तं शुक्लः पटः इत्या-दिषु। स चात्र समवाये चक्षुषः संयोगसमवायाभावेन व्यावर्तमानः स्वव्याप्तं चक्षुषः प्रतीतिजनकमादाय निवर्तत इत्यर्थः। अप्रत्यक्षत्वे कथं समवायप्रतीतिरित्यत आह—**समवायेति** ॥ **लिङ्गस्य त्विति** ॥ समवायस्यादृष्टत्वेऽपि सामान्येन लिङ्गबोधजन-कत्वस्य दृष्टत्वाल्लिङ्गितयैव च समवायस्य बोधान्नादृष्टतेत्यर्थः। इन्द्रियस्यापि संबन्धि-

इन्द्रियस्य तु साधारण्येनापि अक्लृप्तशक्तिकत्वात्; सत्यपि संबन्धे रसादिप्रतीत्य-जनकत्वात्; विषयविशेषे तु कल्पनीयत्वात्; कल्पनायाश्च गौरवदोषादयुक्त-त्वात्; समवायव्यापकलिङ्गस्य चाविसंवादिपरस्परसाकाङ्क्षरूपरूपिणोः नियमेन सहो-

---

प्रतीतिं जनयतीति साधारण्येन गृहीतशक्तिकमित्याशङ्क्याह **इन्द्रियस्य त्विति** ॥ सत्यपि संबन्धे संयुक्तविशेषणविशेष्यभावलक्षणे रसादौ चक्षुषः प्रतीत्यजनकत्वा-दित्यर्थः । ननु चक्षुः संयुक्तविशेषणे रूपे प्रतीतिं जनयत् दृश्यते । तद्वत्सम-वायेऽपि भविष्यतीत्याशङ्क्याह—**विषयविशेषे त्विति** ॥ संयुक्तविशेषणे रूपे प्रतीतिं जनयति चक्षुरिति कल्पनायां गौरवं भवति । संयुक्ते जनयतीति तु लाघवम् । गौरवाच्च लाघवं न्याय्यं इति भावः । संयोगो द्रव्ययोरेवेति तु कुलधर्म एव । रूपस्यापि संयोगयोग्यत्वात् गुणस्य । तदेवं रूपवत्संयुक्तविशेषणेऽपि समवाये चक्षुः प्रतीतिं जनयतीति कल्पयितुमशक्यत्वात् न समवायबोधात् प्रवृत्ति-रिति स्थितम् । नापि समवायव्यापकलिङ्गावबोधात् प्रवृत्तिरिति परिशिष्टा प्रतिज्ञा । तत्र हेतुमाह—**समवायव्यापकलिङ्गस्य चेति** ॥ समवायलिङ्गस्य प्रवृत्ति-समये साकल्येनानवभासनात् परमार्थस्थले समीहागोचररजादौ पुरोवर्तिनि समवाय-व्यापकलिङ्गावबोधात् प्रवर्तत इति न पार्यते वक्तुम् । कथंभूतस्य लिङ्गस्येत्य-पेक्षायामाह—**अविसंवादीति** ॥ स्फटिकलौहित्ययोरिव न विद्यते विसंवादः ययोस्तावपि संवादिनौ तौ परस्परसाकाङ्क्षौ च तौ रूपरूपिणौ च तयोरिति

---

विशेषणे प्रतीतिजनकत्वं सामान्येन सिद्धमित्यत आह—**इन्द्रियस्य त्विति**। तत्र हेतुमाह—**सत्यपीति** ॥ चक्षुष. संयुक्ते फलादौ सत्यपि संयुक्तसमवाये रसादि-प्रतीत्यजनकत्वेन संनिधिविशेषणे प्रतीतिजनकत्वस्यानियतत्वात् । न च तत्रायोग्य-त्वादप्रतीतिः । योग्यस्थलेऽपि मूलसंबन्धादेव शौक्ल्यादिप्रतीतिरित्यर्थः । मा भूत्सा-मान्येन शक्तिः क्लृप्तशक्तिः तथापि रूपसमवायवान्पट इति प्रत्ययबोधेनैव समवाय-लक्षणविशेषविषये चक्षुषश्शक्तिराश्रयणीया इत्यत आह—**विशेषेति** ॥ अस्तु प्रमा-णवत्वात् कल्पनादोषः इत्यत आह—**कल्पनायाश्चेति** ॥ रूपसमवायवानिति प्रतीतेर्वृक्षादिगतिक्रियोपलम्भेन वायुर्वातीति प्रतीतिवदनुमानतोऽप्युपपत्तेः । असं-बन्धस्य समवायस्य प्रत्यक्षत्वमिन्द्रियस्य च तत्र प्रतीतिजननसामर्थ्यमिति कल्पनायां गौरवप्रसङ्गादित्यर्थः । अस्तु तर्हि सम्यग्रजते लिङ्गेन समवायलिङ्गतः प्रवृत्तिः, तथापि विभ्रमस्थले अख्यातिप्रसङ्ग इत्यत आह—**समवायेति** ॥ अविसंवादि-

पलब्धेः साकल्येनानवभासनात्; अविसंवादित्वविशेषणस्य व्यवहारोत्तरकालमध्यव-सेयत्वात्; तदेकदेशावगमस्य विभ्रमेऽपि वर्तमानत्वात्; सत्यपि समवायबोधे

विग्रहः। धवलः प्रासाद इति सहोपलब्धिव्युदासार्थम् परस्परसाकाङ्क्षग्रहणं; पुनश्च जातिव्यक्त्यादीनामुपलक्षणार्थम्। तयोर्नियमेन सहोपलब्धिः। शुक्लो गौः खण्डो गौः इत्यादिका समवाये लिङ्गम्। तमन्तरेण भिन्नयोरेवंविधोपलम्भासंभवादित्यर्थः। ननु तस्य साकल्येन प्रवृत्तिसमयेऽनवभासः कुत इत्याशङ्क्याह— **अविसंवादित्वेति**॥ ननु यद्यपि साकल्येनावभासो नास्ति तथापि रूपरूपिणोः सहोपलब्धिमात्रं विद्यत एवेत्याशङ्क्याह—**तदेकदेश इति**॥ लिङ्गैकदेशावगमस्य रूपरूपिणोः सहोपलम्भमात्रावगमस्य स्फटिकलौहित्यादिविभ्रमेऽपि विद्यमानत्वान्न समवायव्यापकत्वमित्यर्थः। समवायस्य प्रत्यक्षत्वमभ्युपगम्याह—**सत्यपीति**॥ यद्यपि समवायबोधात् परमार्थस्थले प्रवृत्तिः सम्भवति, तथापि न भ्रान्तिस्थले समवायोऽस्ति समीहागोचररजतजातेः पुरोवर्तिनि वृत्तित्वाभावादित्यर्थः। ननु शुक्तिरेव

---

परस्पराकांक्षारूपरूपिणोर्नियमेन सहोपलब्धिस्समवायलिङ्गम् तस्य साकल्येनावभासनादित्यर्थः। स्वयं वियुक्तयोरपि पटघटयोः सहोपलम्भोऽस्तीति नियमेनेत्युक्तम्। नियमेन सहोपलब्धिः घटरूपालोकयोरस्तीत्यत उक्तम्—**नियमरूपरूपिणोरिति**॥ संबन्धिनोरिति यावत्। तथापि तत्रैव व्यभिचारः संबन्धित्वान्नियमेन सहोपलम्भाच्चात उक्तं **परस्पराकांक्षेति**॥ घटरूपालोकयोरवस्थाने परस्परनिरपेक्षत्वादव्यभिचार इत्यर्थः। पुनरसमवायरहिते पीतशंखतिक्तो गुड इत्यादावपि अस्तीत्यत उक्तम् **अविसंवादीति**॥ अत्र रूपरूपिशब्देनावयवावयविजातिव्यक्तिगुणगुण्यादयः सर्वेऽप्ययुतसिद्धास्समानाधिकरणयोग्या विवक्षिताः तेषां चैकैकोपलम्भस्य समवायाप्रत्यायकत्वेन सहोपलम्भ इत्युक्तम्। अत्र चैतादृशस्सहोपलम्भो रूपरूपिसंबन्धनियतः विशिष्टसहोपलम्भत्वाद्व्यतिरेकेण स्तम्भकुम्भोपलम्भवदिति समवायप्रत्यायकं लिङ्गं तस्य कार्त्स्न्येनानवगमादिति भावः।

कथं लिङ्गस्य साकल्येनानवगतिरित्यत आह—**अविसंवादीति**। **तदेकदेशेति**॥ परस्पराकांक्षरूपरूपिसहोपलम्भमात्रस्य समवायरहितेषु पीतशंखादिविभ्रमेष्वपि भावेऽनैकान्तिकत्वादित्यर्थः। भवतु वा येन केन चिल्लिङ्गेन समवायावगमः। तथापि न तस्य प्रवृत्तिहेतुत्वं भ्रमाभ्रमप्रवृत्तिष्वननुगमादित्याह—**सत्यपीति**॥

तस्योभयाननुगतस्याप्रवृत्तिहेतुत्वात्; अन्यथाख्यातेश्च प्रतीतिपराहत्यादिदोषदुष्टत्वात्; उभयानुगतस्यैव प्रवृत्तिकारणत्वोपपत्तेः; विभ्रमे भेदग्रहं विहाय निवृत्तेरदर्शनाच्चोभयाननुगतस्याभेदाग्रहस्य कारणताकल्पनायोगः ॥

तदेतदयुक्तम्। तथा हि— इदमत्र संप्रधार्यम् — इच्छा स्वगोचरे प्रवृत्ति-

---

रजतव्यक्त्यात्मना भातीति युक्तः समवाय इत्याशङ्क्याह—**अन्यथाख्यातेश्चेति** ॥ अन्यदन्यथा प्रतीयत इति प्रतीतिपराहतं, सर्वत्रानाश्वासोऽनालम्बनता ज्ञानस्य, साकारतादोषश्च प्रसज्यत इत्यर्थः। एवं तावन्मतान्तरं निराकृत्य स्वमतमुपसंहरति — **उभयानुगतस्यैवेत्यादिना** ॥ उभयत्र परमार्थस्थले भ्रान्तिस्थले चानुगतस्यैव प्रवृत्तिकारणतोपपत्तेः विवेकाग्रहापरपर्यायस्यासंसर्गाग्रहस्यैव प्रवर्तकत्वमित्यर्थः। तर्ह्यभेदाग्रहस्योभयानुगतस्य निवृत्तिकारणत्वमपि कल्प्यतामित्याशङ्क्योपसंहरति—**निवृत्तेश्चेति** ॥ विभ्रमकाले भेदज्ञानं विहायाभेदाग्रहे सत्यपि निवृत्तेरदर्शनात् न तस्योभयानुगतिरस्तीति न निवृत्तिकारणत्वं कल्प्यत इत्यर्थः।

शङ्कितं मतं प्रत्याचष्टे — **तदेतदयुक्तमिति** ॥ परमतखण्डनेऽपीच्छागोचररजतांशाविवेकात् प्रवृत्तिरित्येतदयुक्तम्, संसर्गाभावस्य संसर्गमात्रानतिरेकिणः संसर्गाग्रहे ग्रहानुपपत्तेरिति प्रागुक्तन्यायेनैव, तथाप्यधिकमाविष्कर्तुं विकल्पयति—

---

अस्तु तर्हि सामानाधिकरण्येन सामान्यविशेषयोः संसर्गज्ञानमेव प्रवृत्तिहेतुरित्यत आह— **अन्यथाख्यातेश्चेति** ॥ रजतज्ञानस्य शुक्तिशकलालम्बनत्वेन प्रतीतिविरोधात्। असतश्च संसर्गस्य प्रतिभासे असत्ख्यातिप्रसङ्गात्। विषयव्यभिचारे विज्ञानानामनाश्वासप्रसङ्गात् अन्यथाख्यातिरनुपपन्नेत्यर्थः। आदिशब्देनानालम्बनत्वादयो गृह्यन्ते। तस्मादस्मदभिमतस्यैव प्रवृत्तिकारणत्वमित्याह **उभयानुगतस्येति** ॥ भेदाग्रहस्येति यावत्। यदुक्तमभेदाग्रहान्निवृत्तिरिति तत्राह **निवृत्तेश्चेति** ॥ किमभेदाग्रहस्य विभ्रमे सद्भावमात्रेणापाद्यते कारणता; किं वा अन्यत्र निवृत्तिकारणत्वेन क्लृप्तत्वात्। नाद्यः सत्यपि तस्मिन् भेदग्रहस्यैव भ्रमे निवर्तकत्वेनाभ्युपगन्तव्यत्वात्। नापि द्वितीयः, अविसंवादिभ्रमस्थले भेदग्रहस्यैव निवृत्तिकारणत्वेन क्लृप्तत्वात्। न च तत्र व्यभिचारित्वादभेदाग्रहः कारणं, भ्रमे तस्य प्रयोजकत्वाभावात्। न च निवृत्तिकाले तस्यापि सद्भावेन कारणत्वं, सत्यपि तस्मिन् पूर्वं निवृत्तेरदर्शनेन व्यभिचारित्वात् कारणत्वकल्पनायोगात्। अतो भेदग्रहस्य निवृत्तिहेतोरभावान्निवृत्तिप्रसङ्गो नास्तीत्यर्थः। एतद्दूषयति—**तदयुक्तमिति** ॥ इच्छा इष्यमाणे प्रवृत्तिजनिका

जनिका, किंवा तदविवेकिनि इति। यद्याद्यः कल्पः, कथं रजतार्थी शुक्तिकामुपादत्ते? यदि द्वितीयः तदभेदाग्रहोऽपि तर्हि निवृत्तिं किं न प्रयोजयेत्? लोष्टादौ तथोपलम्भात्। भेदग्रहस्तत्र निवर्तक इति चेत्, अभेदाग्रहेऽपि संभवति कुतो विनिगमनम्? अभेदाग्रहस्य प्रयोजकतायां गौरवम्, इतरत्र लाघवमिति चेत्, तर्हि इच्छापि स्वगोचरे प्रवृत्तिजनिकेति लाघवमिति। स्वागोचरेऽपि कथमविवेकमपेक्ष्य प्रवर्तयेत्? उभयानुगतिलाभादित्थमाश्रीयते इति चेत्, न; अयथाज्ञानाङ्गीकारेण पुरोवर्तिनीच्छासंभवे स्वगोचर एवेच्छा प्रयोजिकेति प्रयोजकाङ्गीकारेऽपि उभयानुगतिलाभात्। प्रतीतिपराहत्यादिदोषादयथाज्ञानमयुक्तमिति चेत्, कथं

**तथा हीत्यादिना** ॥ इत्यत आरभ्य स्पष्टार्थः। अयथाज्ञानाभ्युपगमे कथं प्रतीतिपराहतिः? न कथंचिदित्याक्षेपमाविष्कर्तुं विकल्पयति--**शुक्तिकाकारस्येत्यादिना** ॥ इदं सितभास्वरं रूप्यमिति सामानाधिकरण्येन बोध्यस्य विद्यमानत्वात सितभास्वरपुरोवर्तिद्रव्यमात्रस्य रजतात्मनावभासो नास्तीत्युक्ते तवैव प्रतीतिविरोधो भवतीत्यर्थः।

उतेष्यमाणादगृहीतविवेक इति विकल्पार्थः। आद्यं दूषयति-- **कथमिति** ॥ शुक्तिशकलस्येष्यमाणत्वाभावादित्यर्थः। द्वितीयं दूषयति—**यदि द्वितीय इति** ॥ इष्यमाणेन भेदाग्रहवदभेदाग्रहस्यापि विद्यमानतया निवृत्तिरपि स्यादित्यर्थः। तच्छब्देनेष्यमाणमुच्यते। लोष्टादौ भेदग्रहस्यैव निवर्तकत्वमिति शङ्कते—**भेदग्रह इति** ॥ उभयस्य सम्भवे सति भेदग्रहस्यैव निवर्तकत्वं कल्पयितुमशक्यम् नियामकप्रमाणाभावादिति परिहरति— **अभेदाग्रहेपीति** ॥ विनिगमकारणमाशङ्कते—पूर्ववादी**अभेदाग्रहस्येति** ॥ विभ्रमे सत्यपि अभेदाग्रहे निवृत्त्यभावेन तस्य कारणत्वाभावे भेदग्रहस्यैव कारणत्वेनाभ्युपगन्तव्यत्वात् पाषाणादिषु अभेदाग्रहस्य निवर्तकत्वे प्रयोजकद्वैविध्येन कल्पनागौरवात्, भेदाभावाग्रहस्यैव विशिष्टस्य विलम्बप्रतीतिकत्वात् भेदग्रहस्य च शीघ्रप्रतिपत्तिकत्वेन तस्यैव कारणत्वादित्यर्थः। परिहरति— **तर्हीति** ॥ इच्छावशादिष्यमाणाविवेकिनि प्रवृत्तिस्वीकारात् इष्यमाणे प्रवृत्तिरिति कल्पने लाघवमित्यर्थः। इष्यमाणाविवेकस्य भ्रमाभ्रमसाधारण्यात् इच्छा स्वविषयाविवेकिन्येव प्रवृत्तिहेतुरिति शङ्कते--**उभयेति** ॥ शुक्तिशकलस्य भ्रान्त्या रजततापन्नत्वात्तत्रापीच्छासंभवेन भ्रमाभ्रमयोरिच्छा स्वविषये प्रवर्तयतीति कल्पनेत्यनुगतिलाभादविवेकपक्षो न स्वीकार्य इति परिहरति—**न अयथेति** ॥ शुक्तिकाकारस्य रजतज्ञानालम्बनत्वे प्रतीतिविरोधः किं वाऽसितभास्वरपुरोवर्तिद्रव्यमात्रस्येति

प्रतीतिपराहतिः ? शुक्त्याकारस्य रजतात्मना प्रतिभासाभ्युपगमे सा स्यात्, सितभास्वरस्य वा पुरोवर्तिद्रव्यमात्रस्य ? नाग्रिमः कल्पः अनभ्युपगमात् । पश्चिमानभ्युपगमे तु भवत एव प्रतीतिविरोधः । तदुक्तम् —

"यः प्रतीतिविरोधस्तु स स्वदोष उदाहृतः ।
सामानाधिकरण्येन बोधाद्रूप्यमिदं सितम् ॥" इति ।

अनाश्वासस्तु अख्यातिमतेऽपि समानः । दोषाभावभावाभ्यां विपर्ययविवेकसिद्धिरपरत्रापि स्यात् । न च दोषाभावेऽपि अग्रहाशङ्कान्यावृत्तिः । न हि अदुष्टमित्येव

ननु अरजतमपि चेत् रजतात्मना कश्चिदवभासमानमङ्गीक्रियते ; तदा परमार्थस्थलेऽपि अरजतं रजतमिति प्रतीयते रजतमेव वेत्यनाश्वासोऽर्थानिश्चयश्च सर्वत्रापद्येत इत्याशङ्क्याह— **अनाश्वासस्त्विति** ॥ अख्यातिपक्षेऽपि क्वचिदिदं रूप्यमिति स्मरणाविवेकदर्शनादन्यत्रापि किं स्मरणाविवेक एव आहोस्वित् ग्रहणमित्यनाश्वासः समान इत्यर्थः । अथ यत्र कारणदोषः तत्रैवाविवेको, दोषाभावे तु ग्रहणात्मकं सम्यग्ज्ञानमेवेति व्यवस्था आस्थीयते तत्राह— **दोष इति** ॥ तर्हि अन्यथाख्यातिमतेऽपि यत्र दोषस्तत्रायथार्थज्ञानं न सर्वत्रेति व्यवस्था तुल्येत्यर्थः । एवं साम्यमभिधायेदानीं दोषाभावभावाभ्यां विवेकसिद्धिरन्यत्र न सिद्ध्यतीति विशेषं दर्शयति— **न च दोषाभावेऽपीति** ॥ दोषो नास्तीत्येतावता विवेकाग्रहोऽपि नास्त्येवेति निश्चेतुं न शक्यते शङ्काव्यावर्तकाभावादित्यर्थः । ननु दोषाभावे निर्दुष्टमिन्द्रियं सम्यग्ज्ञानं जनयिष्यति । ततोऽग्रहाशङ्का व्यावर्तेत इत्याशङ्क्याह— **न हीति** ॥

विकल्प्यानभ्युपगमेनाद्यं दूषयति— **शुक्तिकाकारस्येति** । द्वितीयपक्षे प्रतीत्यानुकूल्यमेव, इदं रजतमिति सामानाधिकरण्येन प्रतीतिः तदनभ्युपगम एव प्रतीतिविरोध इत्यत्राह— **पश्चिमेति** ॥ उक्तेऽर्थे **ब्रह्मसिद्धिकार**सम्मतिमाह— **तदुक्तमिति** ॥ क्वचिद्विषयव्यभिचारेण सर्वविज्ञानेष्वनाश्वासे क्वचिदविविक्तज्ञानद्वयेन सर्वविज्ञानेष्वपि तथाभावशङ्कायां अनाश्वासो गुरुमतेऽपि तुल्य इत्याह— **अनाश्वासस्त्विति** । यत्र दोषस्तत्रैव विवेकः, यत्र विवेकस्तत्र दोष इत्यख्यातिपक्षेऽपि नानाश्वास इत्याशंक्य साम्येन परिहरति— **दोषेति** ॥ तत्रैव दोषस्तत्रैव विपर्ययव्यभिचारज्ञानमिति विपरीतख्यातिपक्षेऽपि नानाश्वास इत्यर्थः ।

एवं साम्येन परिहृत्याख्यातिपक्षे एवानाश्वासानिवृत्तिर्न स्यादित्याह— **न च दोषेति** ॥ कुतो न वाच्यं न निवृत्तिरित्यत आह— **न हीति** ॥ किं तर्हि कार्यं जन-

कारणं कार्यं जनयेत्, समग्रं तु । तथा समग्रता तु कार्यप्रसवावसेया । तथैव च कार्यमनुमिमानस्य परस्पराश्रयत्वप्रसङ्गः । कारणानुमेयत्वे ज्ञानस्य स्वसंवेदनसमयहानिः । एतेन बाधकज्ञानादूर्ध्वमालम्बनाभावात् प्राङ् नाजनि तज्ज्ञानमिति

---

ननु समग्रतापि दोषाभावावमेया भविष्यतीत्याशङ्क्याह—**समग्रता त्विति** ॥ ननु भवतु कार्योत्पादकलिङ्गगम्या समग्रता ; तथापि दोषाभावे समग्रतायाः सिद्धत्वात् कार्योत्पादो भविष्यतीत्यनुमीयत इत्याशङ्क्याह—**तथैव त्विति** ॥ कार्यप्रसवानुमेया समग्रता ; समग्रतानुमेयश्च कार्यप्रसव इति दुरुत्तरमितरेतराश्रयमासज्जत इत्यर्थः । किञ्च दोषाभावे कारणपौष्कल्यात् सम्यग्ज्ञानोदयो भविष्यतीत्यनुमिमानस्य स्वसिद्धान्तध्वंसप्रसङ्ग इत्याह—**कारणेति** ॥ **स्वसंवेदनमिति** ॥ पक्षक्षतिप्रदर्शनेन चोद्यान्तरं चूर्णितमित्याह—**एतेनेति** ॥ बाधाधीनालम्बनवैधुर्याधिगम्ये हि **ज्ञानानुदये** स्वपक्षक्षतिरेवेत्यर्थः । तदेवं दोषाभावेऽपि सम्यग्ज्ञानोदयानिश्चयान्नाग्रहाशङ्काव्यावृत्तिरिति स्थितम् । तर्हि तवापि समानोऽयं दोष इत्याशङ्क्याह—

---

येदित्यत आह-**समग्रं त्विति** ॥ कारणानां समग्रता कार्यजनिकेत्यर्थः । तर्हि दोषाभावे समग्रताप्यस्तीत्यत आह—**समग्रता त्विति** ॥ भेदग्रहणलक्षणकार्येणैव समग्रतावसेया न दोषाभावात् । निर्दुष्टेऽपि चक्षुषि कदाचिद्विषयसन्निकर्षादिकारणपौष्कल्याभावेन दोषाभावस्यानैकान्तिकत्वादित्यर्थः । तर्हि विशिष्टमेघोन्नतिदर्शनेन वृष्टिजन्मानुमानवत् सामग्रीदर्शनादेव कार्यजन्मापि स्यादित्यत आह—**तथैवेति** ॥ मेघोन्नतिवत् सामग्र्याः प्रत्यक्षत्वाभावात् कार्येणैव सामग्र्यवगमाच्च कार्यजन्मावगम इति परस्पराश्रयमित्यर्थः ।

स्वनिष्ठज्ञानस्य वर्तमानदशायां स्वेनैव सामग्र्यनुमेयत्वे स्वप्रकाशत्वभङ्गप्रसङ्ग इत्याह—**कारणेति** ॥ एवमनाश्वासं प्रतीतिविरोधं च परिहृत्य अनालम्बनत्वमुक्तं परिहारातिदेशेन निराचष्टे—**एतेनेति** ॥ एतेन प्रतीतिविरोधपरिहारेणेति यावत् । आलम्बनाभावश्शुक्तेरनालम्बनत्वादिदमंशस्य वा? नाद्यः-स्वतोऽपि ग्रहणस्य शुक्तिकाग्रहणेन निरालम्बनत्त्वप्रसङ्गात् । नापि द्वितीयः-बाधदर्शनायामपीदमंशस्यालम्बनत्वानपायात् । कस्यचिदालम्बनस्य वक्तुमशक्यत्वात् सालम्बनत्वे च दोषसत्त्वासत्त्वाभ्यां भ्रमाभ्रमव्यवस्थोपपत्तिरित्यर्थः । दोषाभावेऽपि विपर्ययाभावः कथमित्याशंक्य दोषस्य विपर्ययकारणतया कारणाभावे कार्याभावनिश्चयो भवत्येव, व्याप्तत्वादिति परिहरति—

कल्प्यत इत्यपास्तम् । दोषाभावनिश्चये तु अयथार्थज्ञानानुत्पत्तिनिश्चयः स्यात्, असति कारणे कार्यानुत्पादनियमात् । औत्सर्गिको व्यवहारः विसंवादात् व्यावृत्ति रित्यपि तुल्यम् । आलम्बनमप्यनिर्वाच्याङ्गीकारे यथाप्रतिभासमस्त्येव अविद्यामयं रजतम् । अन्यथाख्यात्यङ्गीकारे तु पुरोवर्तिन एव रजतात्मनाऽऽलम्बनत्वे को दोषः? तेनाकारेणासतः कथं तथालम्बनत्वमिति चेत्, तदाकारेणासतः तदुचितव्यवहार-योगोऽपि कथम्? व्यवहारः प्रत्यक्षसिद्धो विषयश्च तथा नास्तीत्यन्यथासिद्धत्वादयथा-

---

**दोषाभावेति** ॥ तन्त्वभावे पटाभावनिश्चयनियमात् दोषाभावे तत्कार्यविपर्यया-भावः सुखावसेय इति भावः । दोषस्य च विवेकाग्रहहेतुत्वे वस्त्वग्रहहेतुत्वमपि स्यात्तस्यातिरेकिणोऽभावादग्रहस्यापि प्रागभावनिरपेक्षातिरेकोऽप्यनादित्वादिति द्रष्ट-व्यम् । अनाश्वासस्त्वन्यथाख्यातिपक्षेऽपि तुल्य इत्युक्तं ये परिहारं व्याहरति प्राभाकरः, सोऽस्माकमपि सम इत्याह --**औत्सर्गिक इति** ॥ अयथार्थज्ञानाङ्गीकारे निरालम्बनज्ञानाङ्गीकारप्रसङ्गमुररीकारयति प्राभाकरः । तमपाकरोति **आलम्बन-मपीति** ॥ नन्वन्यथाख्यात्यवलम्बनेन कोऽलीके कथमनालम्बनाद्भयं निखिल-प्रमाणविकलानिर्वाच्यालम्बनेनेत्याशङ्क्याह **अन्यथाख्यातीति** ॥ नात्रान्यथाख्याति-सिद्ध्यैव सिद्धान्तसिद्धिं सिषाधयिषति किन्तु परेणाप्यभ्युपगतीकृत्य दुर्मुखप्रभाकर-निराकरणं सुकरमित्युररीकृत्य परम्परोद्धाटितं दोषराशिं पर्यालोचिताचार्य इत्यनु-सर्तव्यम् । रहस्यं पुनःख्यातिबाधान्यथानुपपत्तिसिद्धानिर्वाच्यख्यातिरेवेति विप-ञ्चितमन्यत्रेति नेह विपञ्च्यते । **तेनाकारणेत्यादि** स्पष्टार्थम् ॥ इदं रजतमिति

---

**दोषाभावेपीति** ॥ ननु चक्षुषो यथार्थज्ञानजननस्वभावस्य कथमयथार्थज्ञानजनकत्वं, स्वभावविरोधादित्याशंक्य अन्यथाख्यातिपक्षे ज्ञानानां यथार्थव्यवहारजननस्वभावानाम यथार्थव्यवहारजनकत्ववदुपपत्तेरेवमिति परिहरति **औत्सर्गिकेति** ॥ इदमंशस्य भावेऽपि रजतस्याभावादनालम्बनत्वपरिहारः कथमित्याशंक्य मायावादिमते अनि-र्वचनीयस्य रजतस्याभ्युपगमान्नैवमिति परिहरति **आलम्बनमिति** ॥ तथाप्य-न्यथाख्यातिपक्षे रजताभावादनालम्बनत्वं तदवस्थमित्याशंक्य शुक्तेरेव रजतज्ञानालम्ब-नत्वाददोष इति परिहरति--**अन्यथेति** ॥ असतस्त्वयाप्यदोषप्रसङ्ग इति शङ्कते पूर्ववादी --**तेनेति** ॥ प्रतिबन्दिन्यायेन परिहरति --**तदाकारेणेति** ॥ तदाकारेणासतस्तज्-ज्ञानविषयत्वाभावात्तदाकारेणासतस्तद्व्यवहारविषयत्वमपि न भवेदित्यर्थः । वैषम्य-माशङ्कते पूर्ववादी --**व्यवहार इति** ॥ व्यवहारे विषयसत्यत्वानुमानमपि स्यादित्या-

व्यवहाराङ्गीकार इति चेत्, अयथाज्ञानेऽपि समः समाधिः। ज्ञानं न प्रत्यक्षमङ्गीक्रियत इति चेत् नित्यानुमेयविज्ञानवादिनो मीमांसकस्य शिरसि पतत्वयं वज्रप्रहारः। मानसवेदनीयत्वे स्वसंवेदनत्वे साक्षिवेद्यत्वे वा न कोऽपि दोषः; तथापि न विभ्रमस्थले ज्ञानविशेषः प्रत्यक्षः इति चेन्न, एतावन्तं कालं इदं रजतमित्यभादित्यनुसन्धानात्, प्राक् च बाधात् सत्यरजतज्ञानाद्विशेषानुपलम्भात्; तदुपलम्भे वा तथा व्यवहारानुपपत्तेः। संवादविसंवादाभ्यां संवेद्यसत्त्वासत्त्वविनिश्चयेन संवित्तिसत्तासत्त्वोर्निश्चये स्वसंवेदनसंवेदनाभ्युपगमहानिः। व्यभिचारि च ज्ञेयं न ज्ञानमनुमापयेत्, ज्ञानास्तमयसमयेऽपि ज्ञेयसद्भावात्; न च ज्ञानं न ज्ञेयानुमेयम्; ज्ञेयाभावानुमेयस्तु ज्ञानाभाव इति सांप्रतम्; प्रत्यक्षप्रतियोग्यधिकरणस्य प्रति-

---

ज्ञानं प्रत्यक्षसिद्धम्। विषयश्च तथाभूतो नास्तीति प्रकारान्तराभावादयथार्थत्वमाश्रीयत इति समः परिहार इत्याह —**अयथाज्ञानेऽपि समः समाधिरिति**॥ ज्ञानं प्रत्यक्षमित्याद्यनिरोधितार्थम्। एतावन्तं कालमिदं शुक्तिकाशकलं रजतमित्यभात् इति उत्तरकाले रजतज्ञानानुसन्धानदर्शनादनुसन्धानस्य च पूर्वज्ञानसापेक्षत्वात् भ्रान्तिकाले सामानाधिकरण्यज्ञानं प्रत्यक्षमित्याह—**नैतावन्तमिति**॥ नन्वस्य भ्रान्तित्वादेव न सत्यरजतज्ञानवत् प्रत्यक्षत्वसंभव इत्याशङ्क्याह **प्राक् च बाधादिति**। ज्ञानानां स्वतःप्रामाण्याभ्युपगमादेव यावद्बाधं न विशेषोपलम्भ इत्यर्थः। सत्यरजतज्ञानादस्य भ्रान्तित्वविशेषोपलम्भे वा दानादिव्यवहारो न स्यात् इत्याह—**तदुपलम्भे वेति**॥ ननु संवादविसंवादाभ्यां संवेद्यसत्त्वासत्त्वनिश्चयो भवति। तेन च संवित्तिसत्तासत्त्वोः निश्चयो घटादौ दृष्टः। इह च विसंवादात् संवेद्यासत्त्वानिश्चयेन भ्रान्तौ संवित्सत्ताभावो निश्चीयत इत्याशङ्क्याह —**संवादेति**॥ किंचा

---

शंक्य विषयाभावग्राहकप्रत्यक्षस्यान्यथासिद्धत्वात्तद्विरोधादनुमानुत्थानान्नैवमिति परिहरति **अन्यथासिद्धत्वादिति**॥ विषयाभावेऽपि ज्ञानस्य प्रत्यक्षसिद्धतया अस्मन्मतेऽपि न दोष इति परिहरति सिद्धान्ती **अयथाज्ञानेपीति**॥ ज्ञानस्य प्रत्यक्षत्वमसिद्धमिति शङ्कते—**ज्ञानमिति**॥ भाट्टमते ज्ञानस्य प्रत्यक्षत्वाभावेऽपि तार्किकमते प्राभाकरवेदान्तिमते ज्ञानस्य प्रत्यक्षत्वाददोष इति परिहरति—**नित्यानुमेयेति**॥ मरणस्मरणयोः प्रत्यक्षत्वेऽपि विपर्ययस्य तदसिद्धमिति शङ्कते—**नचेति**॥ प्रतियोग्यधिकरणयोर्ज्ञानात्मनोरुभयोरपि प्रत्यक्षत्वेनात्मनि ज्ञानाभावस्य भूतले घटाभाववत् प्रत्यक्षोपपत्तेरनुमानवैयर्थ्यमिति परिहरति —**प्रत्यक्षेति**॥

षेधस्यापि प्रत्यक्षेणोपपत्तौ अनुमानवैयर्थ्यात्, असति च ज्ञेये ज्ञानोत्पत्तिदर्शनात् सिद्धावव्यापकस्य ज्ञेयस्याभावादव्याप्यस्य ज्ञानस्याभावानुमानायोगात् [illegible] । उक्तं हि—

" अन्यथैकनिवृत्त्यान्यविनिवृत्तिः कथं भवेत् ।
नाश्ववानिति मर्त्येन न भाव्यं गोमतापि किम् ॥ " इति ।

---

व्यभिचारि धूमदर्शनाद्दहनानुमानं दृष्टं, ज्ञेयं च ज्ञानं व्यभिचरति । [illegible] सत्तानिश्चयाधीनः संवित्तिसत्तानिश्चय इत्याशङ्क्याह—**व्यभिचारि चेति** ॥ ज्ञेयानुमेयं ज्ञानमिति वयमपि न ब्रूमः । किन्तु ज्ञेयाभावानुमेयो ज्ञानाभाव इत्याशङ्क्याह—**न चेति** ॥ प्रतिषेध्यं ज्ञानं प्रतियोगि[illegible] । [illegible]माश्रयो रजतज्ञाननिषेधस्य शुक्तिशकले प्रत्यक्षे प्रतियोग्यधिकरणे यस्य स तथोक्तः । एतदुक्तं भवति-धर्मिप्रतियोगिग्रहणपूर्वकं हि ज्ञानाभावानुमानं [illegible] । [illegible]प्रतियोग्यतिरिक्तश्च ज्ञानाभावो न भवतामस्ति । ततस्तयोः प्रत्यक्षत्वे ज्ञानाभावस्यापि प्रत्यक्षत्वसिद्धौ व्यर्थमनुमानमिति । किं च व्यापकवह्न्यभावेन व्याप्याभावोऽवगम्यते । न च ज्ञानज्ञेययोः व्याप्यव्यापकभावोऽस्ति अतीतादौ ज्ञेयाभावेऽपि ज्ञानोदयदर्शनादित्याह—**असति चेति । अतिप्रसङ्गादिति ।** [illegible] लिङ्गलिङ्गिनोः स्वाभाविकाविनाभावलक्षणव्याप्तिसंबन्धे हि व्याप्यव्यापकभावो वह्निधूमयोः । ज्ञानज्ञेययोस्तदभावेऽपि चेदेकाभावेऽन्याभावस्तर्हि कुम्भाभावेऽपि स्तम्भाभावः स्यात् । उक्तेऽर्थे साक्षित्वेनाप्तवाक्यमाह—**अन्यथेति** ॥ स्वाभाविकाविनाभावाभावे एकस्य व्यापकस्य लिङ्गिनो निवृत्त्यान्यस्य निवृत्तिः कथं भवेत न कथंचिदपीत्यर्थः । यत्र न व्याप्यव्यापकभावः तत्र एकनिवृत्त्या नान्यस्यान्यस्य निवृत्तिः ।

---

प्रत्यक्षे प्रतियोग्यधिकरणे यस्य प्रतिषेधस्य स तथा तस्येति [illegible] । ज्ञानस्यार्थव्यभिचारित्वात् ज्ञानमर्थेन नियतमिति व्याप्त्यसिद्धावर्थाभावेन ज्ञानाभावानुमानासंभवादव्यापकनिवृत्तावव्याप्यनिवृत्त्यनुपपत्तेरित्याशङ्क्याह— **असति चेति** ॥ **अतिप्रसङ्गादिति** ॥ अश्वादेरव्यापकस्याभावादव्याप्यस्य घटादेरपि निवृत्तिप्रसङ्गादित्यर्थः । तत्रैव वृद्धसंमतिमाह—**उक्तं हीति** ॥ अन्यथा व्याप्यव्यापकभावाभावे एकनिवृत्त्यान्यस्य धूमस्य निवृत्तिः कथं भवेत् । मा भूद्व्याप्यव्यापकभावः, अन्यनिवृत्तिः कथं स्यादित्यत्राह—**नाश्ववानिति** ॥ मर्त्यः पुरुषः नाश्ववानित्येतावता **गोमतापि किं न भाव्यमपि** तु भाव्यमेव । अन्यनिवृत्तिमात्रेणान्यनिवृत्तौ गोमानपि

नासति ज्ञेये ज्ञानोत्पत्तिस्तत्कारणत्वादिति चेत् न, अतीतादौ व्यभिचारात्। अपरोक्षज्ञाननिष्ठोऽयं नियम इति चेत् अपरोक्षज्ञानमपि दोषोपेतादिन्द्रियाद्यथाज्ञानं ज्ञेयसत्तामन्तरेणाप्यस्तु, को दोष इति शङ्कायाःको निवारयिता दोषाणामौत्सर्गिककार्योत्पादकसामर्थ्यविघातितैव, न विपरीतकार्योत्पादकतेति चेत्, न; एकस्यापि विरुद्धसहकारिसहितस्य विरुद्धकार्यजननाविरोधात्। यथा भवन्मत एव सहकारिभेदात् कदाचित् यथार्थव्यवहारजनकं ज्ञानम्, कदाचित्तु अयथार्थव्यवहारजनकम्। एवमिन्द्रियमपि सहकारिभेदानुरोधेन कदाचिद्यथार्थम्, कदाचिदयथार्थं च ज्ञानं जनयेदिति को दोषः? तथापि विवादाध्यासितं रजतज्ञानं नायथार्थम्, ज्ञानत्वात्, उभयवादिसिद्धसमीचीनरजतज्ञानवत्। यद्वा रजतं न शुक्तिकात्वेन प्रकाशते, शुक्तिर्वा रजतत्वेन, तद्रूपेणासत्वात्। यत् यद्रूपेणासत्

यथा गोत्वतुरगत्वयोः इत्युदाहरणमाह। मर्त्यो नाश्ववानित्येतावता गोमतापि मर्त्येन न भाव्यमिति किं संभवतीत्यर्थः। तर्हि अस्त्येव ज्ञानज्ञेययोरपि व्याप्तिः ज्ञानोत्पत्तेर्ज्ञेयकारणत्वात् इत्याह---**नासतीति** ॥ परिहरति -- **नेति** ॥ अभूद्वृष्टिर्भविष्यति वृष्टिरित्यादिज्ञानं विशिष्टलिङ्गसामर्थ्यादपि घटते। अपरोक्षज्ञानस्य पुनः कर्मतया ज्ञेयजन्यत्वात्। ज्ञेयाभावे ज्ञानं न संभवतीति तद्विषयोऽयं नियम इति चोद्यार्थः। यथा ज्ञानं ज्ञेयाभावे न संभवत्येव इति नियमः खण्डितः तद्वदपरोक्षमपि किञ्चिज्ज्ञानं दोषबलात् ज्ञेयसत्ताव्यतिरेकेणापि भविष्यतीति परिहारार्थः। शालिबीजस्य तैलाभिषेकलक्षणो दोषः शाल्यङ्कुरमेव प्रतिबध्नाति न विपरीतयवाङ्कुरमप्युत्पादयति तद्वदत्रदोषाणामपि सम्यग्ज्ञाननिरोधकतैव, न विपरीतज्ञानोत्पादकतेत्याशङ्कते---**दोषाणामिति** ॥ दोषाणां विपरीतकार्यजनकत्वं नास्तीति न शक्यते वक्तुम्। दावाग्निदाहदोषस्य वेतत्रबीजगतनिजशक्तिनिरोधपुरः सरतया विपरीतकदलीकाण्डोत्पादकतादर्शनात्। तद्वदेकस्यापि चक्षुषो दोषभावा-

---

न भवेदित्यर्थः। नचार्थस्य ज्ञानजनकत्वादर्थाभावेन ज्ञानानुपपत्तिरेव बाधिका दुष्टादिन्द्रियादपि तदुपपत्तेरित्याह---**अपरोक्षेति** ॥ यथा ज्ञानं ज्ञेयसत्तामन्तरेणापरोक्षमपि ज्ञानमस्त्विति योजना। दुष्टादपि कारणान्नायथार्थज्ञानोत्पत्तिः दोषाणां स्वाभाविककार्यविघानमात्रहेतुत्वादिति शङ्कते - **दोषाणामिति** ॥ सम्यक् ज्ञानविरोधिना दोषेण सहकृतस्य तद्विपर्ययज्ञानजनकत्वमपि नानुपपन्नम्, सहकारणवैचित्र्यादिति प्रतिबन्दिन्यायेन परिहरति - **नैकस्यापीति** ॥ अयथाज्ञाननिरासप्रमा-

तत् तेनाकारेण न प्रकाशते, यथा व्योमकमलम्—इत्यादेः का गतिरिति चेत्; विवादाध्यासितो व्यवहारः नायथार्थः, व्यवहारत्वात्, उभयवादिसिद्धसमीचीनरजतव्यवहारवत्। यद्वा शुक्तिर्न रजतव्यवहारयोगिनी, तद्रूपेणासत्त्वात्। यत् यद्रूपेणासत् तत्तदुचिततव्यवहारयोगि न भवति, यथा कुम्भः स्तम्भोचितव्यवहारयोगी न भवतीत्यादेः या गतिः सैवेति सन्तोष्टव्यम्। यदेतावन्तं कालं रजतमिति व्यवहृतं तत् शुक्तिकाशकलं इत्युत्तरकालानुसन्धानबाधश्चेत्, तत्रापि यदेतावन्तं कालं रजतमित्यभात् सैषा शुक्तिरिति अनुसन्धानबाध इति समं समाधानम्। किंच अयथार्थप्रतिषेधो यथार्थत्वम्; तच्च तत्त्वतो ज्ञानस्यार्थसमुत्थत्वमुपदर्शितार्थसमुत्थत्वमबाधनीयार्थत्वं वा। नाद्यः, सिद्धसाधनात्। द्वितीये तु साक्षाद्रजतसमुत्थत्वं यदि रजतज्ञानस्य साध्यम्, अध्यक्षबाधः, रजताभावस्याप्यध्यक्षत्वात्। परम्परया चेत् सिद्धसाधनम्; रजतानुभवजनितसंस्कारोद्बोधद्वारेण इदं रजतं इति ज्ञानं प्रति रजतस्य कारणत्वोपपत्तेः। तृतीये प्रत्यक्षबाधः स्पष्ट एव; नेदं रजतं इति बाधस्य सिद्धत्वात्। नायं ज्ञानार्थयोर्बाधः; किं तर्हि? व्यवहारस्य इति चेन्न; अनदर्थिनो व्यवहारानुत्पत्तौ

---

भावसहकारिसाहित्येन सम्यङ्मिथ्याज्ञानकार्यजनकत्वाविरोधादित्याह—**न एकस्यापीति** ॥ प्राभाकराभिमतमेवोदाहरणमाह — **यथेति** ॥ **यदेतावन्त**मित्यतः प्राक्तनोऽतिरोहितार्थः। विवादाध्यासितो व्यवहारः नायथार्थ इत्युक्ते बाधकोत्तरकालीनानुसन्धानेन बाधो भवतीति परानुमानस्य दोषमुद्भावयति प्राभाकरः—**यदेतावन्तमिति** ॥ तर्हि विप्रतिपन्नं ज्ञानं नायथार्थमित्यत्रापि स एव दोष इत्याह —**तत्रापीति** ॥ इदानीं विकल्प्य दूषणान्तरमाह—**किं चेत्यादिना** ॥ रजतज्ञानस्य यथार्थत्वं नामार्थसमुत्थत्वमात्रं तावन्न साधयितव्यम्। पुरोवर्तिसितभास्वरद्रव्यसमुत्थत्वस्यास्माभिरप्याश्रितत्वादित्याह — **नाद्य इति** ॥ यथार्थत्वं नाम प्रतिभाससमानार्थसमुत्थत्वमिति द्वितीयो विकल्पः। तत्रापि साक्षात्परम्परया वेति विकल्प्य दूषणमाह -**द्वितीये त्वित्यादिना** ॥ नेदं रजतमित्यनेन यदि रजतं बाध्येत तदा अबाध्यार्थविषयत्वे साध्यमाने भवेत् प्रत्यक्षविरोधः। तन्नास्ति, भेदाग्रहप्रसञ्जिताभेदव्यवहारमात्रबाधकत्वादित्याह — **नायं ज्ञानार्थयोरिति** ॥ तर्हि यस्य रजतभ्रमे रजतेऽपि विरक्तस्य न रजता-

---

णानामनिषेधे कथमयथाज्ञानसिद्धिरिति शङ्कते—**तथापीति** ॥ आभाससमानयोगक्षेमत्वेन तान्यपि निराकरणीयानीति परिहरति—**विवादाध्यासित इति** ॥ उक्त-

**नेदं** रजतमिति ज्ञानस्याबाधकत्वप्रसङ्गात् । अपि च **पराभ्युपगतभ्रान्तिपक्षीकरणेन** स्यादाश्रयासिद्धिः । रजतस्मरणपक्षीकरणेन तु यथार्थत्वसाधने सिद्धसाधनमिति ॥ तदेवं विपरीतज्ञानसंभवात् स्वगोचर एवेच्छा प्रवर्तिकेति प्रयोजकाङ्गीकारेऽपि उभयानुगतिसिद्धेः ।

एतेनैतदपास्तं यदाहुः—समीहितसाधनरजताविवेकात् पुरोवर्तिनीच्छा ; ततः प्रवृत्तिः—इति पारम्पर्येणाविवेकः प्रवृत्तिं प्रसूते इति विवेकाग्रहनिबन्धनायामिच्छायामभेदाग्रहनिबन्धनोपेक्षापि किं न स्यात् लोष्टवत् । तथा चोपादानोपेक्षाभ्यामभिन आकृष्यमाणो विषमां दशामाविशेत् । भेदग्रहादुपेक्षा, नाभेदाग्रहात् इति चेत्, इच्छापि समीहितसाधने प्रवर्तयति, न पुनस्तदविवेकिनि नियामकानुपलम्भश्चेत्, इतरत्रापि तुल्यः पर्यनुयोगः । लघुप्रयोजकाङ्गीकारे अस्मन्मतेऽपि समं समाधानम् । विपरीतज्ञानसंभवाच्च उभयानुगतिलाभः ॥

यत्पुनरुच्यते—विपरीतख्यातिपक्षे ज्ञानं साकारमापतेदिति, तदप्यसत् ।

---

दाने प्रवृत्तिः तस्य यद्बाधकज्ञानं क्षणान्तरभावि तन्न बाधकं स्यात् । तस्मात् प्रतिपन्नोपाधौ रजतनिषेध एव बाधो वक्तव्य इति परिहरति **नातदर्थिन इति** ॥ तस्मात्तृतीयकल्पे बाधः सुस्थ एव । किं च विप्रतिपन्नं ज्ञानमित्यनया वाचोयुक्त्या किं त्वया पराभिप्रेतभ्रान्तिः पक्षीक्रियते अथवा रजतस्मरणमिति विकल्प्य आह—**अपि चेत्यादिना** ॥ स्मृतिप्रमाणद्वैराश्यमेव विज्ञानस्य प्राभाकरमते न तृतीयं विप्रतिपत्त्यालम्बनं ज्ञानमस्तीति आश्रयासिद्धो हेतुरित्यर्थः । ननु पराभिमतस्य प्रतीतिमात्रेणाश्रयत्वे को दोषः । सा प्रतीतिः किं प्रमाणं स्मृतिर्वा ? उभयथापि न तृतीयज्ञानसिद्धिः ॥ **रजतस्मरण**—इत्यादि निगदव्याख्यातप्रायम् । तदेवं समीहागोचररजतांशविवेकसारूप्याद्विवेकाग्रहात् प्रवृत्तिः साक्षादेवेति मतं पराकृत्याधुना परम्परया विवेकाग्रहात् प्रवृत्तिरित्यत्रापि तदेव दूषणजातमतिदिशन्नाह—**एतेनैतदपास्तं यदाहुरित्यादिना** ॥ भेदग्रह एव निवर्तको नाभेदाग्रहः इत्यत्रापि नियामकं किं चिन्नोपलभ्यत इत्याह—**इतरत्रापि तुल्यः पर्यनुयोग इति** ॥ ननु भेदग्रहो निवर्तक इति प्रयोजकाङ्गीकारेऽक्षरलाघवमभेदाग्रहो

---

न्यायेन विपरीतख्यातेः प्रसाधनात् संवादिविसंवादिप्रवृत्त्योरभेदज्ञानस्य तुल्यत्वादेकप्रयोजकलाभोऽस्मन्मतेऽपि तुल्यः इत्यर्थः । भ्रान्तिस्थले प्रतिभासमानाकारस्य बहिरपलापे विज्ञानाकाराविशेषतया साकारविज्ञानवादः स्यादिति शङ्कते—**यत्पुनरिति** ॥

अनिर्वाच्यपक्षे खल्वलीकयोर्ज्ञानज्ञेययोः अङ्गीकारान्न दूषणम् । अन्यथाख्यातिपक्षे-ऽपि अयथाव्यवहारवदयथाज्ञानस्यापि विषयाकारविधुरस्य संभवे किमनुपपन्नम् ? न हि यथाव्यवहारं विषयो नास्तीति व्यवहारस्तदाकारः ; तथैव यथाज्ञानं विषयाभावे-ऽपि न विज्ञानस्य विषयाकारताप्रसङ्गः । पुरोवर्तिनः रजताकारमन्तरेण रजतोचित-व्यवहारगोचरतावदन्तरेणैव रजताकारं तथाविधज्ञानगोचरतोपपत्तेः ॥

तदेवं विपक्षे बाधकतर्कोपपत्तेर्नाप्रयोजक इति स्थितम् । न च विरुद्धः, साध्यविपरीतव्याप्तिवैधुर्यात् । स्यान्मतम् — रजतदुपायेऽपि पुरोवर्तिनि रजतार्थि-ताधीना प्रवृत्तिः । न च सा पुरोवर्तिगोचररजतविज्ञानपूर्विका इत्यनैकान्तिकता हेतोः—इति ; तदसत् । न हि रजतोपायेऽपि रजतार्थिताधीना प्रवृत्तिः ; अपि

---

निर्वर्तक इत्यङ्गीकारेऽक्षरगौरवमर्थगौरवं वा भेदस्य प्रतियोगिभेदनिरूपणाधीन-निरूपणत्वादित्याशङ्क्याह — **लघुप्रयोजक इति** ॥ इच्छा स्वगोचरे प्रवर्तिकेति लाघवं स्वगोचरादगृहीतभेदे प्रवर्तिकेति गौरवमित्यर्थः । ननु इच्छापरमार्थस्थले स्वगोचरे प्रवर्तिका यद्यपि न भ्रान्तौ रजताभावादिति त्वत्पक्षे नैकप्रयोजकतालाभो मत्पक्षे तूभयत्रैकमेव प्रयोजकं लभ्यत इत्याशङ्क्याह **विपरीत इति** ॥ यत्पुन-रित्यादिः स्पष्टार्थः ॥ **अयथाव्यवहारवदिति** ॥ प्राभाकराभिमतो दृष्टान्तो दर्शितः । तं प्रकटयति— **नहीति** ॥ ननु पुरोवर्तिनि रजताकाराभावे कथं तज्ज्ञानविषयत्वमित्याशङ्क्याह— **पुरोवर्तिन इति** ॥ तदेवमित्यारभ्य स्पष्टार्थः ।

---

किमनिर्वचनीयपक्षे ज्ञानस्य साकारत्वमुतान्यथाख्यातिपक्ष इति विकल्प्याद्ये दोषमाह— **तदप्यसदिति** ॥ अनिर्वाच्यरजतस्य बहिरपलापान्न साकारत्वप्रसङ्ग इत्यर्थः ।

द्वितीयपक्षे दोषमाह — **अन्यथेति** ॥ विषयाभावेऽपि व्यवहारस्य साकार-त्वाभाववत् ज्ञानस्यापि निराकारत्वं नानुपपन्नमित्यर्थः । तदेव स्पष्टयति **न हीति** ॥ पुरोवर्तिनो रजताकाराभावे कथं तज्ज्ञानमित्याशङ्क्य व्यवहारवत् ज्ञानस्योपपत्तेरेवमिति परिहरति—**पुरोवर्तिन इति** ॥ रजतेच्छाधीनपुरोवर्तिप्रवृत्तित्वादित्यत्र स्वहेतोरप्र-योजकत्वाभावमुक्तमुपसंहरति —**तदेवमिति** ॥ पुरोवर्तिगोचररजतज्ञानपूर्वकत्वा-भाववति हेतोरवृत्तेर्विरुद्धत्वमपि नास्तीत्याह— **नापीति** ॥ रजतोपाये पुरोवर्तिनि रजतज्ञानविषये रजतेच्छाधीनपुरोवर्तिप्रवृत्तित्वहेतोः सद्भावेनानैकान्तिकत्वमाश-ङ्कते—**स्यान्मतमिति** ॥ नोपाये रजतेच्छाधीना प्रवृत्तिः । किंतु उपायेच्छावशा-दतस्तत्र हेतोरवृत्तेर्नानैकान्तिकतेति परिहरति—**तदसदिति** ॥ ननु फलेच्छाया

तु तदुपायार्थिताधीना । यस्तु फलार्थितामेव साधने प्रवर्तिकां मन्येत, तस्यान्यार्थिता चेदन्यत्र प्रवर्तिका स्यादतिप्रसङ्गः । तत्साधने एवेति नियमान्नातिप्रसङ्ग इति चेत्, न; अज्ञातेऽपि तत्साधने प्रवृत्त्यापातात् । तत्साधनज्ञानमपि तत्सहकारीति चेत्, एवमपि प्रतिग्रहकृषिवाणिज्यधातुप्रयोगाद्यनेकोपायपरिज्ञानसंभवेऽपि कथं कस्यचिदेव कुत्रचिदेव धातुप्रयोगे कृषिसेवादौ प्रवृत्तिः, न चेत्साधनभेदेच्छा नियामिका । तस्मात् फलेच्छोत्पादनसमनन्तरं संजातसाधनभेदसमीहयैव साधनभेदे प्रवृत्तिरिति साम्प्रतम्; तथा च नानैकान्तिक इति । नाप्यनध्यवसितः, सपक्षगामित्वात्; नापि कालातीतः, बाधकप्रमाणानिरूपणात्; नापि सत्प्रतिपक्षः, प्रतिप्रयोगाभावात् । विवादाध्यासिता प्रवृत्तिः विवक्षितरजतज्ञानपूर्विका न भवति, शुक्तिप्रवृत्तित्वात् उभयसिद्धशुक्तिप्रवृत्तिवत् इति चेन्न; शुक्तिगोचरत्वाविशेषेऽपि भ्रान्तरज-

---

विपक्षे बाधकाभावादप्रयोजकत्वमाह— **न शुक्तिगोचरत्वाविशेषेपीति** ॥ व्याप्यत्वासिद्धेरिति विवक्षितरजतज्ञानपूर्वकत्वाभावेन व्यापकेन शुक्तिप्रवृत्तित्वात् इत्यस्य

---

एव साधने प्रवर्तकतोपपत्तौ तत्रापीच्छान्तरकल्पनायां गौरवमनैकान्तिकत्वं तदवस्थमिति शङ्कते— **यस्त्विति** ॥ दूषयति— **तस्येति** ॥ अतिप्रसङ्गपरिहारमाशङ्कते— **तत्साधन एवेति** ॥ तत्साधनेऽपि प्रवर्तकत्वमनियतम् । अज्ञातेऽपि तस्मिन्प्रवृत्त्यभावादिति परिहारेण एकस्मिन्नेव साधने प्रवृत्तिनियमानुपपत्तेस्साधनविशेषेच्छायाः एव प्रवर्तकत्वस्य वक्तव्यत्वान्न व्यभिचारता हेतोरिति परिहरति—**एवमपीति** ॥ उक्तहेतुकथनपूर्वकमनैकान्तिकत्वाभावमुपसंहरति **तस्मादिति** ॥ **सपक्षगामित्वादिति** ॥ पुरोवर्तिरजतज्ञानपूर्विकायां समीचीनप्रवृत्तौ हेतोर्वर्तमानत्वादित्यर्थः । कालातीतः कालात्ययापदिष्टः इत्यक्षपादसूत्रात् प्रतिप्रयोगं शङ्कते—**विवादाध्यासितेति** ॥ विवक्षितरजतज्ञानपूर्विका न भवति पुरोवर्तिविषयरजतज्ञानपूर्विका न भवतीति यावत् ।

रजतप्रवृत्तौ व्यभिचारनिवारणार्थं शुक्तीति विशेषणम् । विपक्षबाधकतर्काभावेनाप्रयोजकतया व्याप्यत्वासिद्धिरिति दूषयति— **न शुक्तीति** ॥ प्रवृत्तेरपि पुरोवर्तिरजतज्ञानपूर्वकत्वे बाधाभावात् । न चैवं शुक्तिप्रवृत्तावनियतहेतुत्वेनाहेतुत्वप्रसङ्गो बाधः । अभ्रान्तशुक्तिप्रवृत्तेश्शुक्तिज्ञानपूर्वकत्वमितरस्यास्तु रजतज्ञानपूर्वकत्वमिति व्यवस्थयापि सहेतुकत्वोपपत्तेः कार्यवैलक्षण्येन कारणवैलक्षण्यस्यावश्यं

तार्थिनो विवक्षितरजतज्ञानपूर्विका, नान्यस्य इति व्यवस्थायां विरोधाभावाद्व्याप्यता-सिद्धेः । अन्यथा रजताविवेकनिबन्धनत्वनिराकरणेऽप्युक्तहेतुप्रवृत्तौ कः प्रतीकारः ? ततो न सत्प्रतिपक्षतापीति सिद्धम् । सम्यग्रजतप्रवृत्तौ च साध्यादिसंप्रतिपत्तेः न साध्यविकलतादिदृष्टान्तदोषोऽपीति सर्वमनवद्यम् ॥

सेवन्तां मतिमन्तः सरस्वतीं चन्द्रिकां विशदाम् ।
आनन्दबोधकृतिनः प्रसरन्तीं पूर्णदिक्चक्रम् ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्द-बोधविरचिता न्यायदीपावलिः समाप्ता ॥**

रामचन्द्रयतीन्द्रस्य कारुण्याख्यदिवाकरः ।
उदेतु सततं सम्यङ् मयि रामगिरौ सदा ॥
रामचन्द्रयतीन्द्रस्य शिष्यो रामपदाङ्कितः ।
महाविहारनिलयः तस्येदं पुस्तकं शुभम् ॥

---

हेतोः अविनाभूतत्वासिद्धेरित्यर्थः ॥ **अन्यथेति** ॥ मदुक्तप्रकारेण व्यवस्थान-भ्युपगमे विप्रतिपन्ना प्रवृत्तिः न रजताविवेकनिबन्धना शुक्तिप्रवृत्तित्वात्, संप्रति-पन्नशुक्तिप्रवृत्तिवत् इत्यनुमाने का प्रतिक्रियेत्यर्थः । शेषं सुगमम् ॥

---

भावित्वादित्यर्थः । प्रतिबन्दीग्रहणेन साधयति — **अन्यथेति** ॥ शुक्तिप्रवृत्तिर्विमता रजताविवेकनिबन्धना न भवति शुक्तिप्रवृत्तित्वात् समीचीनशुक्तिप्रवृत्तिवदित्यनु-नुमानेनाविवेकहेतुकत्वनिराकरणे अभिहित एव परिहारो वचनीयः । स परस्मिन्नपि पक्षे समान इत्यर्थः । हेतुदोषं परिहृत्य दृष्टान्तदोषं परिहरति—**सम्यग्रजतप्रवृत्तौ चेति** ॥

रजतेच्छाधीनपुरोवर्तित्वस्य पुरोवर्तिगोचररजतज्ञानपूर्वकत्वस्य च सम्य-ग्रजतप्रवृत्तावुभयवादिसंमतत्वेन साध्यसाधनोभयवैकल्यदोषाणामशक्यत्वान्न दृष्टा-न्तदोषाणामवकाश इत्यर्थः । श्रोतृप्रवृत्तिसिद्ध्यर्थमात्मीयग्रन्थस्य वैशिष्ट्यमाह-- **सेवन्तामिति** ॥ चन्द्रिकासाधर्म्यान्तरमाह--**प्रसरन्तीमिति** ॥ पूर्णदिक्चक्रमिति क्रियाविशेषणम् ॥ श्रीः ॥

आनन्दबोधयतिवाग्विभावाम्बुराशि सम्भूतय......रुक्तगुणोज्ज्वलेन्द्रियम् ।
श्रीचित्सुखप्रवरशिष्यसुखप्रकाशटीकाविरस्तु सुधियां हृदये कवीनाम् ॥ (?)

जयति भुवनबीजं ज्योतिरेकं मुरारेः
हृदयनिहितमात्रे यत्र संसारयन्त्रः ।
गलति गलतिमोहे शश्वदानन्दसान्द्रं
यदभिदधति वेदा विश्वनश्चक्षुरेकम् ॥

अनुभूतिस्वरूपाख्यो यतिश्चकार चन्द्रिकाम् ।
व्याख्यां [सामर्थ्य स] न्तापि पुंसामानन्ददायिनीम् ॥

इति श्रीमदनुभूतिस्वरूपाचार्यकृतायां न्याय-
दीपावलीटीकायां द्वितीयाध्यायः
॥ समाप्तः ॥

---

**श्रीमत्परमहंसपरिव्राजकाचार्यचित्सुखमुनिपूज्यपादशिष्य श्रीचित्सुखप्रकाशमुनिविरचितायां न्यायदीपावली-टीकायामख्यातिवादः ॥**

अन्तेवासिजनाख्यकैरवकुलं सम्यक् प्रबोधं नय-
न्जीयान्मेदिनिमण्डले यतिवरः श्रीरामचन्द्रो गुरुः ।

ब्रह्मानन्दविशिष्टगोकुलगणे यस्सर्वदा शोभते
त्रय्यान्ताख्यगिरीन्द्रमस्तकतले तिष्ठन् सतामाश्रयः ।

— हरिःओम —